हरे पाहि प्रकाशनम्– अष्टमपुष्पम्

श्रीब्रह्मण्यतीर्थपूज्यपादानां शिष्येण
व्यासयतिना विरचितायां श्रीमद्भाष्यटीकाविवृतौ

# तात्पर्यचन्द्रिका

प्रथमाध्यायस्य द्वितीय-तृतीय-चतुर्थ पादाः
( द्वितीयसम्पुटम् )

# TATPARYA CHANDRIKA

BY SRI VYASATEERTHA
( DISCIPLE OF SRI BRAHMANYA TEERTHA )

**( II, III and IV Parts of 1 Chapter)**

II VOLUME

*Publisher*
**Harthi Raghavendra Rao,** B A., Rtd Tahsildar
HARE PAHI PRAKASHAN
No 144, 11th Cross, Jayanagar, Mysore-14

## PUBLISHER'S NOTE



मध्वभक्तो व्यासशिष्यः पूर्णप्रज्ञमतानुगः ।
व्यासराजमुनिश्रेष्ठः पातु नः कृपया गुरुः ॥

It is with great pleasure that the I Chapter (complete) of the Tatparya Chandrika of Sri Vyasaraja is presented to the readers on the Aradhana day of the author who is also called as Chandrikacharya. My respectful pranams to H. H Sri Sri Devendra Teertha Swamiji who graciously consented to release the book today.

It was my earnest desire to publish the II Chapter simultaneously But it was not to be for the reason that it is very difficult to find competent and painstaking printers in Sanskrit nowadays My grateful thanks to Sri D S Krishnachar, Partner, Prabha Printing House, Bangalore, for the fine get up of the book.

I hope the readers will make use of the I Chapter of the book and I assure them that the II Chapter will be made available on Vijaya Dasami, Dundubhi year.

मत्प्रेरकेण हरिणा या पूजा स्वस्य कारिता ।
वाग्यज्ञरूपालक्ष्मीशस्तया प्रीणातु केशवः ॥

Mysore
13-3-1982

**H. Raghavendra Rao**

# विषयानुक्रमणिका



## प्रथमाध्यायस्य द्वितीयः पादः



## प्रथमाध्यायस्य तृतीयः पादः



## प्रथमाध्यायस्य चतुर्थः पादः

॥ श्री ॥

श्रीमद्ब्रह्मण्यतीर्थपूज्यपादशिष्यश्रीमद्व्यासमुनिविरचिता

# तात्पर्यचन्द्रिका

## प्रथमाध्यायस्य द्वितीयः पादः

॥ श्री गुरुभ्यो नम हरि· ॐ ॥

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नम ॥

यैर्लिङ्गैः साधितः पूर्वं नाम्नां विष्णौ समन्वयः ।
तेषामिहोच्यते लिङ्गजातीयानां समन्वयः ॥ १ ॥

तदुक्तमनुव्याख्याने—

" इत्यन्यत्रप्रसिद्धोरुशब्दराशेरशेषतः ।
ज्ञाते समन्वये विष्णौ लिंगैर्ह्यपि समन्वयः ॥
तेषामन्यगतत्वे तु न स्यात्सम्यक्समन्वयः ।
इत्येवाशेषलिङ्गानां ब्रह्मण्येव समन्वयम् "॥ इति

॥ सर्वगतत्वाधिकरणम् ॥

### ॥ ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ ॥

यद्यपि पूर्वपादान्त्यस्योत्तरपादाद्यस्य च अधिकरणस्य नावांतरसंगत्यपेक्षा। तथापीह तस्याः संभवात्फलस्यावश्यवक्तव्यत्वाच्चैतत्पूर्वपक्षे पूर्वाधिकरणसिद्धांताक्षेपो दर्शितो भाष्यादौ। अत्र "सर्वेषु भूतेषु" इत्युक्तं सर्वगतत्वं किमादित्यादेः किं वा विष्णोरिति चिन्ता। तदर्थं "तस्यैतस्यासावादित्यः" इत्यादि पूर्ववाक्यं किमादित्यविषयं किंवा ब्रह्मविषयमिति। तदर्थं "एतमेव ब्रह्म" इति ब्रह्मशब्दादयः किं गौणाः किंवा मुख्या इति। तदर्थमर्भकौकस्त्वं किं ब्रह्मणि न युक्तमुतयुक्तमिति॥ पूर्वपक्षस्तु॥ अयं सर्वगत आदित्यः। "तस्यैतस्यासावादित्यो रस" इत्यादिना प्रकृतस्यादित्यस्यैवैतमिति परामर्शात्। ननु लोकतोन्यत्र प्रसिद्धस्यास्याप्यादित्यशब्दस्यांतरधिकरणन्यायेन विष्णुवाचित्वात्कथं तेन तदन्यस्य प्राप्तिः। न च वाच्यं तत्र देवतावाचिनां समुद्रान्तस्स्थत्वादि-

लिङ्गाद्विष्णुपरतोक्ता। अत्र तु न विष्णुलिङ्गमस्ति। न हि गङ्गायां घोषइत्यत्र गङ्गाशब्दस्तीरपर इति गङ्गायां मत्स्य इत्यत्रापि तथेति। तत्र प्रवृत्तिनिमित्तस्यानन्याधीनत्वादिना विष्णावेव तेषां मुख्यताया उक्तत्वात्। एतेन "आदित्यो रसः यश्चासावादित्यः आदित्यो भवति" इत्यादित्यश्रुतेर्बहुत्वादन्यप्राप्तिरिति निरस्तम्। विष्णौ मुख्यश्रुतिबाहुल्येनान्यप्राप्त्ययोगात्। न च तत्र तत्प्रकरणस्थानां सवित्रादिशब्दानामेव विष्णुवाचितोक्ता, न तु तत्पर्यायादित्यादि शब्दानामपीति युक्तम्। तथात्वे तत्प्रकरणेऽदितिशब्दस्याप्यभावेनोत्तराधिकरणटीकायामदितिशब्दस्योक्त -न्यायेन सावकाशत्वशंकानुपपत्तेः।

"देवतांतरगाः सर्वे शब्दावृत्तिनिमित्ततः।
विष्णुमेव वदंत्यद्धा तत्सङ्गादुपचारतः"॥

इत्यनुव्याख्यानस्थसर्वशब्दविरोधाच्च। तत्रेन्द्रादिशब्दपर्यायाणामश्रवणेन तत्समन्वयार्थमधिकरणांतरारंभापाताच्च।

तत्र लिंगमात्रेण सवित्रादिशब्दानां विष्णुवाचित्वस्य तत्परत्वस्य वा सिद्धौ अत्र श्रुतिसहितलिंगेनाऽऽदित्यादिशब्दानां विष्णुवाचित्वस्य तत्परत्वस्य वा सुतरां सिद्धेश्च। एतेन "सूर्य आत्मा" इति सौरमन्त्रोदाहरणात् सूर्यप्राप्तिरिति निरस्तम्। उक्तन्यायेन मंत्रस्थसूर्यादिशब्दस्यापि विष्णौ मुख्यत्वात्। न च "अन्तः" इत्यादौ चंद्रादिकतिपयगतत्वादिकमुक्तम्। अत्र तु सर्वगतत्वमुच्यत इति भेदः, व्यधिकरणत्वात्। न हि प्रतिपाद्याभेदः शंकितः। किं तु पूर्वपक्षानुदयः। न च "चंद्रमस्येतम्" इति सजातीये चंद्रादावुक्ताऽऽदित्ये अनुक्तत्वलिंगात्तत्प्राप्तिः। "सर्वेषु" इति सर्वशब्देनादित्यस्यापि ग्रहणसंभवेन सावकाशलिङ्गेन श्रुत्यादिबाधायोगात्। संति चात्र "एतमेव ब्रह्म" इति ब्रह्मशब्दाद्याः श्रुतयः, "स योऽतोऽश्रुतोऽगतोमतोऽनतोऽदृष्ट" इत्यश्रुतत्वादिलिङ्गानि च, ब्रह्मशब्दस्य च विष्णौ मुख्यताया आनंदमयाधिकरणे सिद्धत्वात्, ज्योतिरधिकरणे च ज्योतिषो विष्णुत्वेऽश्रुतत्वादेर्हेतूकृतत्वात्, अदृष्टत्वस्य च विष्णुधर्मतायाः "अदृश्यत्वादिकगुणक" इत्यत्र वक्ष्यमाणत्वात्, "स योऽतोऽश्रुत" इत्यादिसन्निधाने च "अंतरपुरुष" इत्यंतरत्वश्रवणात्तस्य चांतर्याम्यधिकरणे विष्णुलिंगतायाः सेत्स्यमानत्वात्। न च चक्षुर्मयत्वादिना सर्वजीवानां प्राप्तिः। तस्याप्यानन्दमयाधिकरणन्यायेन प्राचुर्यार्थतया, पादांत्यप्राणाधिकरणन्यायेन शत-

संवत्सरत्वादेरिवांतर्यामिविषयतया वा संभवात्। पशुशब्दस्य तद्विशेष च्छाग इवादित्यश्रुत्या चक्षुर्मयत्वादिजीवलिंगानां तद्विशेषादित्ये पर्यवसानेन सर्वजीवप्रापकाभावाच्च। नचार्भकौकस्त्वलिंगादन्यस्य प्राप्तिः। तस्यापि विष्णुधर्मताया "अन्तस्तद्धर्मोपदेशात्" "उपासात्रैविध्य" इत्यत्र च उक्तत्वात् हृद्यपेक्षयेत्यादौ वक्ष्यमाणत्वाच्च। वक्ष्यमाणसिद्धान्तन्यायाच्छादनेन पूर्वपक्षकरणे च तन्न्यायेनैवैतत्सिद्धान्तफलसिध्यैतस्य वैयर्थ्यात्। सर्वेषु भूतेष्वित्यनेन सर्वगतत्वस्यैवोक्ततयार्भकौकस्त्वाभावाच्च। अन्यथा अत्रोक्तः सर्वगतोनविष्णुश्चेत्पूर्वोक्तोपि सर्वगतो न विष्णुः स्यादित्याक्षेपायोगात्। मैवम्। "संवत्सर एव प्रध्वंसयन् तस्यैतस्यासावादित्यो रस" इति संवत्सराधिपतित्वरूपसंवत्सरसारत्वलिगात् "यश्चासावादित्य" इति प्रसिद्धार्थयच्छब्दोपबन्धात् "तस्मात्पुरुषं पुरुषं प्रत्यादित्योभवती" ति सर्वपुरुषाभिमुख्यलिंगाच्चादित्यशब्दस्य प्रसिद्धादित्यपरत्वात्। अत एव भाष्यटीकयोरादित्यशब्दस्य प्रसिद्धपरत्वं लिंगाधीनमिति दर्शयितुं "तस्यैतस्यासावादित्योरस" इत्यादिलिगप्रतिपादकांशोप्युपात्तः। उक्तं ह्यनुव्याख्याने "पुनश्च प्रापकाद्धेतोस्तत्राधिकरणांतरम्" इति। न चैवं सत्यावश्यकत्वाल्लिंगैरेव पूर्वपक्षः लिंगसाहचर्यादेव सर्वगतत्वस्यान्यत्र प्रसिद्धत्वं चोच्यताम्। किं तदुपजीविश्रुत्युपन्यासेनेति वाच्यम्। उक्तलिंगानामादित्यविशेषणतयैव प्रतीत्या सर्वगतविशेषणत्वाप्रतीतेः साक्षात्तैः पूर्वपक्षाद्यसंभवात्। तदेतदभिप्रेत्योक्तं न्यायविवरणे "बहवो ह्यत्रादित्यशब्दाः क्षित्यादिपूक्त्वाऽऽदित्येनुक्तिरित्यादि लिंगं च" इति।

यद्वा अतराद्यधिकरणेष्विंद्रादिशब्दानां तैस्तैर्लिंगैर्विष्णुपरतैव व्युत्पादिता। न तु तत्र मुख्यता। "तस्मान्मुख्यार्थता विष्णोरिति कृत्वा-हृदि प्रभुः। समन्वयं साधयती" त्यनुव्याख्याने मुख्यत्वोक्तिराकाशादि पदप्रवृत्तिनिमित्तस्य भगवदधीनत्वोक्तिश्च स्थितायां त्रिपाद्यां प्रवृत्ते "तदधीनत्वात्" इत्यत्र सर्वशब्दानां भगवति मुख्यताया वक्ष्यमाणत्वात्तदभिप्राया। अत एव "हृदि कृत्वा" इत्युक्तम्। ईक्षत्यधिकरणे वाच्यत्वोक्तिरपि तदुपयोगितया। टीकायां प्रत्यधिकरणं तत्तच्छब्दवाच्यत्वोक्तिरपि तदभिप्राया। तत्तच्छब्दप्रवृत्तिनिमित्तगुणलाभस्य वक्ष्यमाणसापेक्षत्वेपि तत्तत्प्रकरणस्थगुणमात्रलाभः पूर्वाधिकरणाक्षेपः समाधानं च तत्तदधिकरणमात्रसाध्यम्। एवं चादित्यादिशब्दानां विष्णौ मुख्यताया

अनुक्तत्वात्तैः पूर्वपक्षोदय इति न्यायविवरणाभिप्रायः। अत एवात्र टीकादौ आदित्यशब्दस्य न विष्णुपरता, तल्लिंगाभावात्। प्रत्युतादित्यलिंगसद्भावादिति दर्शयितुं तल्लिंगप्रतिपादकांशोप्युपात्तः। एवं चोत्तरत्राप्यादित्यादिशब्दैः पूर्वत्रापि प्राणादिशब्दैः पूर्वपक्षोदयः सुलभः। अन्यथा अन्य श्रुतीनामन्यलिंगानां च तदधीनत्वन्यायेन ब्रह्मणि मुख्यत्वस्य सिद्धत्वेन अन्यश्रुत्याद्याश्रयणेन पूर्वपक्षः क्वापि नोदीयात्। यद्वा अंतरित्यत्रैंद्रादिशब्दानां विष्णौ मुख्यत्वोक्तिरस्तु। तथाप्यादित्यशब्दो नांतरधिकरणविषयवाक्ये श्रुतः। नापि तन्न्यायविषयः। अत्रेव तत्र निरवकाशदेवतालिंगाभावात्। अत एव टीकादौ तदविषयतां दर्शयितुं देवतालिंगप्रतिपादकांशोप्युदाहृतः। पर्यायाणामपि तदधिकरणन्यायविषयाणामेव तेन समन्वयसिद्धिः। न तु तदविषयाणाम्। उत्तराधिकरणटीकाप्यदितिशब्दसजातीयैंद्रादिशब्दसमन्वयस्योक्तत्वाभिप्राया।

अनुव्याख्याने सर्वशब्दोपि न्यायविषयसर्वपरः। तत्राधिदैविकत्वाद्युपाध्युक्तिरपि अधिकरणांतरविषयाधिभौतिकादिव्यावृत्त्यर्था, नतु सर्वाधिदैविकसंग्रहार्था। तस्माद्युक्तः पूर्वपक्षः। नचैवं यत् संबंधात्सर्वगतत्वस्यान्यत्रप्रसिद्धता तन्नामसमन्वय एव उच्यतामिति वाच्यम्। अंतर्यामित्वादेर्लिंगस्य पृथिवीशरीरत्वादिलिंगसंबंधादेवान्यत्रप्रसिद्धत्वात्तत्समन्वयार्थं पादांतरे कार्ये तत्संगत्यर्थमत्रापि लिंगस्यैव समन्वेतव्यत्वात्।

न च यत्र लिंङ्गं नामसंबंधादन्यत्रप्रसिद्धं तदधिकरणं नामसमन्वयपरमाद्यपादस्थं चास्त्विति वाच्यम्। तथात्वे आदित्यादिशब्दप्रवृत्तिनिमित्तगुणस्यांतरधिकरणेनैव लब्धतया साक्षादपूर्वगुणालाभात्। अर्भकौकस्त्वादिपूर्वपक्षमूलयुक्तेः प्रसिद्धोपदेशादिसिद्धांतयुक्तेश्च सर्वगतवाक्य इवादित्यवाक्येऽसत्त्वाच्च। नामपादे नामसमन्वये हेतुतयोक्तलिंगसमन्वयस्यैवेहाकांक्षितत्वाच्च। तस्मादादित्यश्रुतितः सूर्यप्राप्तिर्युक्ता। सौरमन्त्रोदाहरणाच्च तत्प्राप्तिः। मन्त्रे "चक्षुर्मित्रस्ये" ति चक्षुष्ट्वस्य श्रवणात्तस्य च "आदित्यश्चक्षुर्भूत्वा" इत्यादिश्रुत्याऽऽदित्यलिंगत्वात्। उक्तादित्यश्रुत्युपोद्बलिताद्विशिष्यादित्येनुक्तत्वलिंगाच्च तत्प्राप्तिः। चक्षुर्मयत्वादिलिंगाच्च सर्वजीवानां प्राप्तिः। आनंदमयोक्तस्य कोह्येवान्यादिति प्राचुर्यार्थे हेतुव्यपदेशस्य तत्प्रायपाठस्य च अत्राभावेन तन्न्यायाविषयत्वात्। ज्ञान-

करणतया प्रसिद्धचक्षुरादिसंबंधस्यैव नित्यज्ञानेतर्यामिण्यप्यसंभवेन तत्प्राचुर्यस्य सुतरामसंभवाच्च। चक्षुश्शब्दस्य विष्णुपरत्वे च मयटो वैयर्थ्यम्।

न च चक्षुर्मयत्वादीनामादित्ये पर्यवसानम्। "चत्वारः पुरुषा इति बाभ्व" इति बाभ्वचिह्नितोपक्रमस्य "इति ह स्माह बाभ्व" इति बाभ्वचिह्नितोपसंहारस्यैव च वाक्यस्यैकत्वात्तन्मध्यस्थादित्यशब्दस्य सूर्यपरत्वेपि तदुपरितने "एतं ह्येव बह्वृचा" इत्यादौ "सर्वेषु भूतेष्वेतं" इत्यंते च वाक्ये बहुकृत्वः श्रुतस्यैतच्छब्दस्य "अथैष ज्योति" रित्यादाविव वक्ष्यमाणजीवरूपचक्षुर्मयादिपरत्वात्, अर्भकौकस्त्वाच्च न विष्णोः सर्वगतता। अंतः इत्यत्र अंतर इत्यत्र "अतर्यामि" इत्यत्र च सर्वगतत्वाल्पौकस्त्वयोरविरोधो नोक्तः। तत्प्रकरणे सर्वगतत्वस्याभावेन विरोधशंकानुदयात्, उदये वा तत्रत्यन्यायेनैव परिहार्यत्वात्। उपासात्रैविध्यादित्यत्र तु अतस्स्थत्वाद्युक्तेः प्रयोजनमात्रमुक्तम्। न त्वविरोधः। हृद्यपेक्षयेत्यत्र तु तयोरत्राविरोधे उक्तेपि "अगुष्ठमात्रः पुरुष" इत्यत्र मात्रशब्दस्यावधारणार्थत्वात्सर्वगतस्य सावधारणांगुष्ठपरिमाणत्वमयुक्तमिति शंकिते मूर्तिविशेषे व्यक्त्यात्मना सावधारणमपि तद्युक्तमिति समाधास्यते। सर्वेषु भूतेष्वित्यत्र चाल्पौकस्त्वमुच्यते। भूतादन्यत्राभावप्रतीतेः। अन्यथा भूतपदवैयर्थ्यात्। सिद्धांतिना "सर्वभूताशयस्थित" इति स्मृतिसमाख्यया सर्वजीवहृदयस्थत्वस्यैव वक्तव्यत्वाच्च। पूर्वाधिकरणाक्षेपस्त्वित्थम्। तस्य सर्वभूतगतस्यैव सिद्धांतिना सर्वगतत्वांगीकारात्तदभावे तदभाव इति।

यद्वा एतमेवेत्यवधारणेन विष्णोरन्यस्यैव सर्वभूतगतत्वाद्विष्णोर्भूतादन्यत्र सत्त्वेपि सर्वगतत्वायोग इति। न चार्भकौकस्त्वमंतर्यामिण्यपि युक्तम्। "एष म आत्मांतर्हृदये ज्यायान्पृथिव्या" इत्यादि श्रुत्या तस्यापि सर्वगतत्वेन तद्विरुद्धाल्पौकस्त्वायोगात्।

न च पूर्वपक्षे "ब्रह्मततमं" इत्युक्तस्य सर्वगतत्वस्याप्यादित्यनिष्ठत्वात्तस्याप्यल्पौकस्त्वायोग इति वाच्यम्। आदित्यश्रुत्याद्यनुसारेण ततमत्वस्य संकोचात्। न च ब्रह्मणि तथा, ब्रह्मत्वव्याघातात्। ब्रह्मशब्दस्य च विष्णौ मुख्यत्वेप्यल्पौकस्त्वादिलिंगादिहामुख्यार्थत्वात्, ज्योतिरदृश्यत्वाद्यधिकरणयोश्च बाधकाभावान्मुख्यस्याश्रुतत्वादेर्विष्णुधर्म-

त्वेपि प्रकृतेऽर्भकौकस्त्वादिबाधकेनामुख्यस्य तस्य जीवेप्युपपत्तेः । अंतर्यामीत्यत्र चेह विष्णुलिंगत्वेन निश्चितस्यांतरत्वस्य "यः पृथिव्या अंतर" इति श्रवणादंतर्यामी विष्णुरिति वक्ष्यते। न त्वेतत्सिद्धांतात्प्राक्तत्रांतरत्वादीनां विष्णुधर्मत्वनिश्चयः। अत एव तत्र भाष्यकारो वक्ष्यति "स हि सर्वेषां भूतानामंतरपुरुष" इत्यादिना अंतर इत्यंतराधिकरणे तु चक्षुरंतस्स्थत्वं विष्णोरिति वक्ष्यते। न चेह तच्छ्रूयते। किं त्वंतरशब्दमात्रमित्याद्यूह्यम्। तस्माद्युक्तः पूर्वपक्षोदयः॥

सिद्धांतस्तु "संवत्सरो वै प्रजापतिः। तत्र संवत्सरं नाम ब्रह्माणं" इत्यादिश्रुतिस्मृतिषु उत्तराधिकरणभाष्ये वक्ष्यमाणरीत्या संवत्सरशब्दस्य चतुर्मुखे प्रसिद्धत्वात् श्रौतप्रसिद्धेश्च बलवत्त्वात् पूर्ववाक्ये च "महापुरुष इति यमवोचाम संवत्सर एव" इति संवत्सरे महापुरुषपदप्रयोगाच्च संवत्सरशब्दस्य चतुर्मुखपरत्वात्। तस्मादुत्तमत्वरूपस्य च तत्सारत्वस्य विष्णावेव संभवात् यच्छब्दोपबंधस्य "स यश्चायं पुरुषे, यश्चासावादित्ये" इत्यादाविव श्रुत्यादिप्रसिद्धे ब्रह्मण्यपि संभवात्। "आदित्यो ज्योतिरादित्य" इत्यादौ च ब्रह्मण्यप्यादित्यशब्दस्य प्रसिद्धेः। "पुरुषं पुरुषं प्रत्यादित्यो भवती" त्यनेन च 'प्रतिगृहं कूप' इत्यनेनेव सर्वपुरुषगतत्वस्यैवोक्तत्वेन तदाभिमुख्योक्त्यभावात्, भावे वाऽऽदित्यमंडलस्यैव पुरुषाभिमुख्यदर्शनात् अदर्शनेपि देवतायास्तदंगीकारे चेश्वरेपि तत्संभवात्। सौरमंत्रे च "सूर्य आत्मा जगतस्तस्थुषश्च" इति ब्रह्मलिंगसद्भावात्। मंत्रस्थस्य च "चक्षुर्मित्रस्य वरुणस्याग्ने" रिति चक्षुश्शब्दस्य "चक्षुर्देवानां" इतिश्रुत्या ब्रह्मण्येव संभवात्। पूर्णदर्शनशक्तित्वादिरूपस्य वा चक्षुरादिस्वामित्वरूपस्य वा चक्षुर्मयत्वादेः "सर्वेन्द्रियमयो विष्णु" रित्यादिभाष्योक्तस्मृत्या विष्णौ संभवात् जीवेपि चक्षुरादिविकारत्वस्यासंभवात्। एतच्छब्दस्य च "अथैष ज्योति" रित्यादावथशब्दादेरिवात्र प्रकरणविच्छेदकस्याभावेन पूर्वोक्ताशरीरप्रज्ञात्मपरत्वात्। वक्ष्यमाणस्यापि चाश्रुतत्वादिगुणैर्विष्णुत्वेन तत्परत्वेप्यनिष्टाभावात्। अल्पौकस्त्वस्य च व्योमवदिति सौत्रपदसूचितेन। "एकत्राप्यनवस्थाने सर्वत्रावस्थितिः कथम्। एकत्रैव तु संस्थानं नैवात्रप्रतिपाद्यते" इति न्यायेन सर्वगतेपि संभवात्।

अनुव्याख्याने च "स्थितस्य ह्यल्पदेशेषु सर्वगत्वं भवेद्ध्रुवम्।

एकत्राप्यनवस्थस्य कुत एवाखिलास्थता" इत्युक्तत्वात्, श्रुतौ भूतपदस्य च तत्रोपासनार्थत्वात्सर्वपदेन चादित्यस्यापि ग्रहणसंभवेनादित्येऽनुक्तत्वाभावात्। उक्तरीत्या च बाधकाभावेन ब्रह्मशब्दस्याश्रुतत्वादेश्च अमुख्यत्वायोगात्। भाष्योक्तश्रुत्यादिषु च ब्रह्मशब्दस्य विष्णावेव प्रसिद्धत्वात् प्रसिद्धसंभवे चाप्रसिद्धग्रहणायोगस्य च सौत्रप्रसिद्धपदेन सूचनात्। ब्रह्मशब्दस्य जीवरूपामुख्यार्थत्वे च जीवादन्यस्य मुख्यब्रह्मणो विष्णोरमुख्यब्रह्मणश्च जात्यादेः सत्त्वेनान्यसंबंधनिराकरणासंभवेनावधारणायोगात्। ईश्वररूपमुख्यार्थत्वे चान्यस्य मुख्यब्रह्मणोऽसत्त्वेनान्यसंबंधनिराकरणसंभवात्। भाष्योक्तश्रुत्यादौ च सावधारणब्रह्मशब्दस्य विष्णावेव प्रयोगदर्शनेनेहापि तेन तस्यैव प्रत्यभिज्ञानात् "ब्रह्मेत्याचक्षत" इत्यनेनोक्तप्रसिद्धेश्च ब्रह्मशब्दार्थत्वेनाप्रसिद्धजीवपरत्वेनुपपत्तेः अश्रुतत्वादेश्चोपसंहारस्थत्वेन बलवत्त्वात्तदनुसारेणोपक्रमस्थादित्यश्रुतेरर्भकौकस्त्वादिलिंगानां च नेतव्यत्वात्। अणोश्च जीवस्य सर्वगवत्वायोगात्। योगेवानादितः सर्वजीवानां सर्वशरीरसंबंधे शरीरकर्मादिव्यवस्थाऽयोगेनाभिमानस्यापि प्रसंगेन सर्वेषां सर्वशरीरगतदुःखादिभोगप्रसंगात्। व्रीह्यादिशरीरगतजीवांतरस्य तत्तदिंद्रियाभिमानिनां च तदीयसर्वशरीरसंबंधाभावेन भोगाप्रसंगात्।

ईश्वरस्य तु स्वाभाविकशक्तिविशेषेण तदप्रसंगात् "आत्मानं वेद आत्मानं परस्मै शंसति यस्तित्याज सचिविदं सखायं" इति च सर्वगतस्य तस्यात्मनो वेदनशंसनत्यागेषु कर्मत्वेन जीवस्य तु कर्तृत्वेन निर्देशात्। कर्मकर्त्रोश्चोत्सर्गतो भिन्नत्वात्। "मामहं जानामि तदात्मानमेवावेदहं ब्रह्मास्मि" इत्यादाविव च प्रकृतेऽपवादकाभावात् "अहमात्मा गुडाकेश सर्वभूताशयस्थित" इति स्मृतिसमाख्यानाच्च अत्रोक्तः सर्वगतो विष्णुरेवेति। तदेतदभिप्रेत्योक्तं न्यायविवरणे "तथापि निरवकाशा एतमेवेत्यवधारणादय" इति। अनुव्याख्याने तु सर्वसंयोगित्वादिमात्रं नात्र प्रतिपाद्यम्। तस्य आनंदादिवद्गुणत्वाभावात्। किंतु तत्तच्छक्तिप्रबोधनार्थं तत्र तत्रावस्थानम्। तच्चायुक्तम्। ईश्वरस्य दूरस्थत्वेपि तत्र शक्तत्वादिति प्राप्ते तत्र तत्रावस्थानं न दूरस्थस्याशक्त्या। किंतु लीलयैवेति सिद्धांत इत्युक्तम्। तत् "विवक्षितगुणोपपत्ते" रिति सूत्रस्य विवक्षितः दूरे शक्तस्यापि तत्तच्छक्तिबोधनार्थं तत्र तत्रावस्थान-

रूपो यो गुणस्तस्य लीलयोपपत्तेरिति वर्णकांतरमभिप्रेत्य ॥

सूत्रक्रमस्तु आद्ये सूत्रे विषयवाक्यस्थश्रुतिरूपस्वपक्षसाधकोक्तिः। द्वितीये तदुत्तरवाक्यस्थलिंगरूपसाधकोक्तिः। तत्र च विवक्षितत्वं टीकोक्तरीत्या वक्तुं योग्यत्वम्। वक्तुं योग्ये हि विवक्षा भवति। यद्वा विवक्षितत्वं वक्ष्यमाणत्वम्। वक्ष्यमाणे हि विवक्षा भवति। ततश्चाश्रुतत्वादीनामुपसंहारस्थत्वाद्बलवत्तेत्यर्थः। अथवाऽपौरुषेये वेदे वक्तुमिच्छाया अभावाद्विवक्षितत्वं तात्पर्यविषयत्वम्। ततश्चाश्रुतत्वादीनामप्राप्तत्वादिना श्रुतेस्तत्र तात्पर्यान्न मिथ्यात्वमित्यर्थः। तृतीये साध्यस्य सर्वगतत्वस्याणौ जीवे स्वरूपेणैवासंभवरूपपरपक्षबाधकोक्तिः। "स यश्चायमशरीर" इति श्रुतिश्रुतस्याशरीरत्वस्य जीवे अनुपपत्तिं सूचयितुं च शारीरपदम्। चतुर्थे जीवे सर्वगतत्वस्य स्वरूपेणासंभवेपि वाक्यशेषस्थकर्मकर्तृभावविरोध इत्येवंरूपबाधकोक्तिः। अत एव तृतीयसूत्रस्थानुपपत्तिशब्दस्य प्रकृतेन सर्वगतत्वेनैवान्वयात्कर्मकर्तृभावानुपपत्तिर्न तदर्थ इति चतुर्थसूत्रसार्थक्यम्।

यद्यपि विवक्षितगुणा अव्यवधानेन प्रकृताः। तथापि ब्रह्मणि तेषामुपपत्तिं वदता द्वितीयसूत्रेणैव जीवेर्थादनुपपत्तेरप्युक्तत्वात्तृतीयं सूत्रं न तत्परम्। पंचमे यद्यपि प्रथमसूत्रोक्तब्रह्मशब्दस्य जीवेप्युपपत्तिशंका निरस्यत इति तस्य द्वितीयत्वं युक्तम्। तथाप्युत्सर्गतो भेदसाधकस्य कर्मकर्तृभावस्योपोद्बलकादेतमेवेत्यवधारणान्नापवादशंकेत्येतदर्थस्याप्युक्तेः पंचमता। स्वतंत्रहेत्वंतरानुक्तेश्च न तत्र चशब्दः। षष्ठे पंचमेन श्रौते स्वपक्षसाधके समाप्तेऽनंतरं स्मार्तस्य तत्साधकस्योक्तिः। सप्तमे तर्हि स्मृतिसमाख्यया सर्वगतत्वस्याल्पौकस्त्वरूपत्वादणौ जीवे सर्वगतत्वस्येव सर्वगते ब्रह्मण्यल्पौकस्त्वस्यापि स्वरूपेणैवासंभव इत्येवं रूपस्य स्वपक्षबाधकस्योद्धारः। अत्र च व्योमवदित्यनेन न विरोधपरिहारः।

निचाय्यत्वादेवमित्यनेन चाल्पौकस्त्वोक्तेः प्रयोजनोक्तिः। यद्यपि नोपासात्रैविध्यादित्यत्रैवाल्पौकस्त्वोक्तेरपि प्रयोजनमुक्तम्। तथाप्युपासनार्थमंतरस्थत्वाद्युक्तौ तच्छ्रुतिरप्रमाणं स्यात्। उपासनाया मानसक्रियात्वेनार्थाभावेपि संभवात्। नहि सप्रयोजनत्वं प्रामाण्यम्, मणिप्रभायां मणिभ्रमस्य तत्प्रसंगात्, तृणादिज्ञानस्य तदभावप्रसंगाच्चेति शंकायामुपासनाया ज्ञानात्मकत्वादर्थाभावोऽसिद्ध इति परिहर्तुं "चायृदर्शने"

इत्यस्माद्धातोर्निष्पन्नस्य निचाय्यशब्दस्य प्रयोगः। अष्टमे सर्वगतस्यापि ब्रह्मणो व्योमवद्भूताश्रयत्वरूपाल्पौकस्त्वसंभवेपि तद्वद्चेतनत्वाभावाज्जीववद्भोगप्रसंग इत्येवंरूपस्य स्वपक्षबाधकस्योद्धार इति॥

अत्र "एतद्भावाभिधं लिङ्गं क्रियालिङ्गे ततःपरम्। अतर्याम्यंतरश्चेति क्रियाभावाख्यमुच्यते। अदृश्यत्वाद्यभावाख्यं श्रुतिर्लिङ्गादिका परा" इत्यनुव्याख्याने सर्वत्रेत्यत्र सर्वत्रावस्थितिरूपं भावाख्यं लिङ्गं प्रतिपाद्यम्। अत्तेत्यत्र संहाररूपक्रियात्मकं लिंगम्। गुहामित्यत्रापि कर्मफलभोगरूपक्रियात्मकं लिङ्गम्। अतर इत्यत्रांतस्स्थितिरूपभावसहितं रमणरूपक्रियात्मकं लिङ्गम्। अंतर्यामीत्यत्रापि तत्सहितं नियमनरूपक्रियात्मकं लिङ्गम्। अदृश्यत्वादीत्यत्रभावात्मकं लिंगम्। वैश्वानर इत्यत्र पाचकत्वाद्यनेकलिंगसहितं वैश्वानरनामेत्यापादपरिसमाप्त्यधिकरणोपाधयो दर्शिताः। तन्न केवलं सुधोक्तरीत्या तत्तदधिकरणप्रतिपाद्यगुणासांकर्यार्थम्। किन्तु संगत्यर्थं च। तथाहि। विद्यमानस्यैव क्रियान्वयात्क्रियातो भावस्य प्राथम्यम्। न हि क्रियासामान्यस्य स्थितिसामान्यापेक्षत्वमिव स्थितिसामान्यस्य क्रियासामान्यापेक्षाऽस्ति। तत्रापि कर्मफलभोगवदत्तृत्वरूपसंहर्तृत्वस्य ब्रह्मण्यसंभावितत्वाभावात् तथा कर्मफलात्तृत्वरूपविशेषं प्रति सामान्यरूपत्वात् तथा स्थित्यनंतरं संहारस्य धीस्थत्वात् प्रातिपदिकश्रुतिसाहित्येनान्यत्र प्रसिद्धतया सर्वगतत्वसाधर्म्याच्च सर्वगतत्वानंतर्यमत्तृत्वस्य, तदानंतर्यं कर्मफलभोक्तृत्वस्य एकैकरूपलिंगोक्त्यनंतरमेव तन्निरूप्यविशिष्टरूपलिंगोक्तिर्युक्तेति भोक्तृत्वानंतरमंतराद्यधिकरणद्वयम्। तत्राप्यंतरत्वस्य श्रुतिसाहित्येनान्यत्रप्रसिद्धतया लिङ्गसाहित्येनान्यत्र प्रसिद्धांतर्यामित्वाज्ज्यायस्त्वात् तथा आदित्यादिनियामकत्वेनावस्थानविशिष्टरमणरूपमंतरत्वमयुक्तम्। बहुव्यापारवतः तद्धेतुकविक्षेपेणदुःखादिप्रसंगादित्यंतरत्व आक्षिप्ते यद्यदनधीनसत्ताप्रवृत्तिप्रतीतिकं तन्नियमने तस्य दुःखादि, ईश्वरस्तु सत्तादिप्रद इति सत्तादिप्रदत्वरूपांतर्यामित्वप्रतिपादनादंतर इत्येतदानंतर्यमंतर्यामीत्यस्य। एवं भावरूपलिंगसमन्वये समाप्ते तन्निरूप्याभावरूपत्वाददृश्यत्वादेस्तदानंतर्यम्। एवं केवललिंगसमन्वये समाप्ते लिंगाधिकनामसमन्वयस्योभयात्मकत्वादंत्यता। अन्यापि संगतिस्तत्तदधिकरणे वक्ष्यते।

एवं चादृश्यत्वाधिकरणात्प्राचीनानि पंचाधिकरणानि भावलिङ्ग-

विषयतैका महापेटिका। तत्रापि आद्यं विना चत्वारि क्रियाविषयत्वेन तत्रापि आद्यद्वयं क्रियामात्रविषयत्वेन। उत्तरद्वयं तु भावसहितक्रिया-विषयत्वेन। पादांत्योपांत्ये तु बहुविषयत्वेन एकावांतरपेटिकेत्याद्यूह्यम्।

अन्ये तु "सक्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः सत्य-संकल्प" इति वाक्ये मनोमयत्वादिनोपास्यो जीवः, तस्यैव मनः प्राणादिसंबंधात्, ब्रह्मणस्तु "अप्राणो ह्यमनाः शुभ्र" इत्यादिश्रुत्या-तद्राहित्यादिति प्राप्ते ब्रह्मैवोपास्यम्, सत्यकामत्वज्यायस्त्वादिलिंगात्। जीवधर्मास्तु मनोमयत्वाणीयस्त्वादयो जीवाभिन्ने ब्रह्मणि युक्ताः। न च वैपरीत्यं शंक्यम्। विशिष्टचैतन्यरूपस्य जीवस्य ब्रह्मण्यध्यस्तत्वात्। अध्यस्तसर्पासाधारणधर्मैश्च भीषणत्वादिभिः रज्जू रूपवती। न तु रज्जु-रूपेणाभिगम्यत्वादिना सर्पो रूपवान्, तदा सर्पस्यैवाभावात्। सर्प-दशायां त्वस्ति वास्तवी रज्जुरिति सिद्धांतः। तदुक्तं भामत्यां—

"समारोप्यस्य रूपेण विषयो रूपवान्भवेत्।
विषयस्य तु रूपेण समारोप्यं न रूपवत्"

इति। आद्यसूत्रस्य च सर्वत्र वेदांतेषु परमात्मपरतया प्रसिद्धस्य ब्रह्म-शब्दस्योपदेशादित्यर्थ इत्याहुः।

अत्र ब्रूमः॥ तत्वतो भात्यधिष्ठाने नारोप्यगतधर्मधीः। ब्रह्मणश्च तथा भानं त्वयाप्यत्राभ्युपेयते॥ १॥ यद्यप्यारोप्यस्यासाधारणरूपेण ज्ञानदशायामधिष्ठानमस्ति। अधिष्ठानस्य तु तथा ज्ञानदशायामारोप्यं नास्ति। तथाप्यधिष्ठानं तथाज्ञानदशायां नारोप्यधर्मेण धर्मवत्। न हि रज्जू रज्जुत्वाभिगम्यत्वादिना ज्ञानदशायां भीषणत्वादिमत्। प्रकृते चाधिष्ठानं ब्रह्मत्वसाधकसत्यकामत्वाद्यसाधारणरूपेण भासते। न हि सिद्धांतः सत्यकाम इत्यादि वाक्यशेषाज्ञानमूलः। यद्यपि सत्यकाम इत्यादिवाक्यजन्यमधिष्ठानतत्वज्ञानं परोक्षं तथापि तत्परोक्षभ्रमविरोध्येव। इह चाणीयत्वादिविभ्रमः श्रौतत्वापरोक्षः। अत एवायं न सोपाधिकः, येन तत्त्वज्ञानेप्यनुवर्तेत। किं च त्वन्मतेप्यस्य वाक्यस्य सत्यसंकल्पादि-युक्तसगुणब्रह्मविषयत्वात्। जीवसगुणब्रह्मणोश्च निर्गुणेध्यस्तत्वात्। कथं परस्परमधिष्ठानाध्यस्तभावः। यथोक्तं संक्षेपशारीरके

"स्वाज्ञानकल्पितजगत्परमेश्वरत्वजीवत्वभेदकलुषीकृतभूरिभावा।
स्वाभाविकस्वमहिमस्थितिरस्तमोहाप्रत्यक्चितिर्विजयते भुवनैकयोनि"

इति । किञ्च रज्जुमुद्दिश्य भीषणमिति व्यपदेश इव ब्रह्मणि मनोमयत्वादिश्रौतव्यपदेशो प्रमाणं स्यात् ।

अपि च त्वयास्य वाक्यस्योपासनापरतया असत्योपासनायाश्च स्वीकृतत्वात्सत्यसंकल्पत्वज्यायस्त्वादीनां जीवे स्वरूपेणासत्वेपि तथोपासनं किं न स्यात् । न च सहश्रुतेषु मनोमयत्वादिकमेवोपास्यं न तु सत्यसंकल्पत्वादिकमित्यत्र हेतुरस्ति ॥

सूत्राक्षरार्थोऽप्ययुक्तः ॥ आद्यसूत्रे हेतुमात्रस्योक्तत्वेन मनोमयत्वादिनोपास्यं ब्रह्मेति प्रतिज्ञांशस्याध्याहार्यत्वात् । द्वितीये सत्यकामत्वादिमिथ्याभूतगुणेषु श्रुतितात्पर्योपपत्तिसहितत्वयोरभावेन विवक्षितोपपत्तिपदयोरस्वारस्यात् । तृतीये सत्यकामत्वादिगुणानां ब्रह्मण्युपपत्ति वदता द्वितीयेनैव तेषां जीवेनुपपत्तेरर्थादुक्तत्वेन तेन पौनरुक्त्यात् । चतुर्थे आधाराधेयभावस्येव "एतमितः प्रेत्याभिसंभवितास्मि" इति कर्मकर्तृभावस्यापि विरुद्धविभक्तिक शब्दं वदता शब्दशेषशब्देनैव ग्रहणसंभवेन पंचमेन पौनरुक्त्यात् । पंचमेऽपि "एष म आत्मांतर्हृदय" इति वाक्यशेषंतस्स्थत्वेनोक्तस्य मनोमयत्वादिगुणकस्य "एवमयमंतरात्मन् हिरण्मय" इति समानप्रकरणे श्रुत्यंतरे जीवस्य यः शब्दोंतरात्मन्निति सप्तम्यंतस्ततोन्यो हिरण्मय इति प्रथमांतो यो ब्रह्मणश्शब्दस्तेन शब्दविशेषेण मनोमयत्वादिगुणको न जीव इति त्वदुक्तस्य शब्दविशेषस्य श्रुत्यंतरस्थत्वेन अस्मदुक्तस्य प्रस्तुतब्रह्मशब्दे सावधारणत्वरूपविशेषस्येव स्वप्रकरणस्थत्वाभावात् । स्वतंत्रहेत्वंतरपरत्वेन चतुर्थ इवात्रापि चशब्दप्रसंगाच्च । एवं सूत्रांतरेप्यनुपपत्तिरूह्या । अत्रापि परमतेपि "अनुपपत्तेस्तु न शारीर" इत्यादिना भेदस्य "विवक्षितगुण" त्यनेन गुणानां चोक्तेरैक्यनिर्गुणत्वप्रतिकूलता स्फुटैवेति ॥

केचित्तु "सर्वं खल्विदं ब्रह्म" इत्यादिवाक्यं ब्रह्मविषयं, मनोमयवाक्यं तु जीवविषयमिति भिन्नविषयत्वेन यः परकीयपूर्वपक्षः तस्यैकविषयत्वसंभवेऽयोगादेवं पूर्वपक्षः । सर्वं खल्विदं ब्रह्मेति ब्रह्मशब्दनिर्दिष्टो जीव एव । सर्वशब्दनिर्दिष्टब्रह्मादिस्तंबपर्यंतकृत्स्नात्मकताया अनादिसंसारे कर्मवशाज्जीवे संभवान्निखिलहेयप्रत्यनीके ब्रह्मणि तदयोगात् । जन्मादिकारणतायाश्च कर्मद्वारा जीवेपि संभवात् ब्रह्मशब्दस्य च जीवेपि प्रयोगादिति ॥

सिद्धांतस्तु ॥ जीवस्य जीवांतरात्मकत्वाभावेन सर्वात्मकत्वायोगात् सर्वात्मकता च सर्वप्रकारतेति स्वीकारेण प्रकारभूतशरीरगतानां दोषाणां प्रकारिणि ब्रह्मण्यप्रसंगात्। ब्रह्मशब्दकारणतयोश्च जीवेऽस्वारस्यात् ब्रह्मैव सर्वात्मकमिति ॥ सूत्राक्षरार्थस्तु ॥ सर्वत्र सर्वं खल्विति निर्दिष्टे जगति तत्समानाधिकरणेन ब्रह्मशब्देन तदात्मकतयाभिधीयमानं परं ब्रह्मैव। खलुशब्देन सर्वात्मकतायाः तज्जलानितीति हेतुत्वार्थेनेतिशब्देन च जन्मादिकारणतायाः प्रसिद्धत्वेनोपदेशात्। कारणत्वादेश्च "आनंदाद्ध्येव खल्विमानि भूतानि" इत्यादिश्रुत्यंतरे ब्रह्मण्येव प्रसिद्धत्वादित्याहुः। तन्न। त्वन्मतेंतरधिकरणे छांदोग्योक्तस्यादित्यांतरस्थस्य जीवत्वे "यश्चासावादित्ये" इति आनंदवल्ल्युक्तस्यापि जीवत्वमिति पूर्वपक्षवत् "सर्वं खल्विदं" इत्यत्रोक्तस्य कारणस्य जीवत्वे यतोवेत्यादावुक्तस्यापि तस्य जीवत्वमिति पूर्वपक्षस्य संभवेन कारणताया वाक्यांतरे ब्रह्मणि प्रसिद्ध्यभावात्। किं च "आनंदाद्ध्येव खलु" इत्यत्र हिशब्दखलुशब्दयोः "यतो वा इमानि आत्मा वा इदं" इत्यादौ वैशब्दादेः श्रवणेन तत्रापि श्रुत्यंतरप्रसिद्ध्यपेक्षा स्यात्।

अपि च "अन्नाद्ध्येव खल्विमानि भूतानि जायंते प्राणाद्ध्येव खल्विमानि भूतानि" इत्यत्रेव खलुशब्दादेः श्रवणेप्यब्रह्मपरता किं न स्यात्। अक्षरार्थोप्ययुक्तः। सर्वात्मकत्व(स्यापि)स्य हि साध्यत्वे तत्प्रतिपादनाय श्रुत्यनुगमाय च सूत्रे सर्वमिति निर्देशः स्यात्। न हि सर्वत्रेत्यनेन सर्वात्मकता लभ्यते। किं तु सर्वगतता। सौत्रप्रसिद्धशब्दस्य भावप्रधानता च कल्प्या। यच्चोक्तं "अर्भकौकस्त्वात्" इति सूत्रे "एष म आत्मांतर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वा सर्षपाद्वा" इत्युक्तमणीयस्त्वमौपाधिकम्। तदुपाधेर्हृदयस्योक्तत्वात्। "ज्यायान्पृथिव्या" इत्यादिनोक्तमहत्त्वं तु स्वाभाविकम्। तदुपाधेरनुक्तत्वादिति। तन्न। हृद्यपेक्षयेत्यत्र हृदयस्यांगुष्ठप्रमाणतायास्त्वयाप्युक्तत्वात्तस्य सर्षपादणीयस्त्वेनुपाधित्वात्। किं च "प्रशस्यस्य श्रः। ज्य च। वृद्धस्य च" इत्यत्र वृद्धस्येति सूत्रेण वृद्धशब्दस्यैव ज्यचेत्यनेन सूत्रेण प्रशस्यशब्दस्यापि ज्यादेशविधानादिहश्रुतावणीयस्त्वं स्वाभाविकं ज्यायस्त्वंत्वतिशयेन प्रशस्यत्वमिति किं न स्यात्। एतदभिप्रेत्योक्तं भाष्ये "न चाप्रामाणिकं कल्प्यं" इति। न तु टीकोक्तरीत्याभेदसत्यत्वमात्रमभिप्रेत्य ॥

टीकाक्षरार्थस्तु। पूर्वं चक्षुर्मयत्वादिकमंतर्यामिण्यंगीकृत्याल्पौकस्त्वं न युक्तमित्युक्तम्। इदानीं जीवधर्मत्वात्तस्य तदपि न युक्तमित्याह। चक्षुर्मयत्वाद्ययोगाच्चेति ॥ सर्वगतत्वानतिरिक्तत्वेनेति ॥ "अत सातत्य गमने" इति धातोः "संततोह्यत उच्यत" इति वचनाच्चातत्वं सर्वगतत्वानतिरिक्तमित्यर्थः ॥ व्रीह्यादिगतजीवांतरवदिति ॥ स्वर्गाच्च्युतः स्थूलशरीरसंबंधार्थं पित्रादिशरीरप्रवेशायान्यकर्मनिर्मितव्रीह्यादिशरीरगतो जीवो जीवांतरशब्दार्थः॥ सर्वगततया सर्वजीवाग्रहणापातादिति ॥ सर्वजीवानां कर्मत्वाभावे सर्वगतवाक्ये सर्वगततया ये सर्वजीवाः प्रकृतास्तेषां "स य एवमेतमात्मानं" इति कर्मभूतात्मविशेषणेनैतच्छब्देन ग्रहणं न स्यात्। ग्रहणे सर्वजीवानां कर्मत्वापत्तेः। तथा चैतच्छब्दस्य प्रकृतसर्वपरत्वसंभवे तदेकदेशपरत्वमयुक्तमित्यर्थः।

यद्वा एतमित्यनेन सर्वजीवानामनिर्देशे एतच्छब्दस्वारस्यार्थं सर्वगतवाक्येपि सर्वगततया सर्वेषां ग्रहणं न स्यात्। तथा च सर्वे जीवाः सर्वगता इति पूर्वपक्षिणा यद्गृहीतं तद्धीयेतेत्यर्थः॥ तथा प्रतीत्यभावेनेति ॥ कर्मीभूतात्मविशेषणेन चक्षुर्मयत्वादिना जीवसामान्यलिङ्गेन जीवमात्रस्यैवप्रतीतेरित्यर्थः। न केवलं कर्मत्वं जीवविशेषस्येत्ययुक्तम्। किन्तु कर्तृत्वमपि। "योऽवगुरेत्तं शतेन यातयात्" इत्यत्रेव यः शंसत्यस्य वेदा दुग्धदोहा भवंतीति सामान्येनैव प्रत्यवायश्रवणात्। अन्यथा केषांचित् प्रत्यवायो न स्यादित्यपि द्रष्टव्यम्। असदपरोक्षतया प्रतीयते वाच्यत्वादिति ॥ धर्माधर्मादेरपि ईश्वराद्यपरोक्षत्वान्न व्यभिचार इति भावः॥

सर्वगतत्वाधिकरणम् ॥ १ ॥

## ॥ ॐ अत्ता चराचरग्रहणात् ॐ ॥ ९ ॥

अत्र पूर्ववैषम्यप्रदर्शनेन पूर्वपक्षोत्थानादनंतरसंगतिः। अत्र "सर्वं वा अत्तीति तददितेरदितित्वम्" इत्युक्तमत्तृत्वं किमदितेर्विष्णोर्वेति चिन्ता। तदर्थं सर्वशब्दसंकोचकमस्ति न वेति। तदर्थं सर्वं वै इति वाक्यं किं प्रसिद्धेर्थे शब्दान्वाख्यापकं किं वा प्रसिद्धार्थं बाधित्वायोगोक्त्या "तत्तदत्तुमध्रियत" इति प्रतिज्ञाते सर्वात्तृत्वेहेतुपरमिति ॥

पूर्वपक्षस्तु ॥ युक्तमादित्यश्रुतिसहचरितमपि सर्वगतत्वं विष्णौ "अन्तः" इत्यत्र तत्पर्यायसवितृशब्दसमन्वयस्यासिद्धेः। अदितिशब्द

पर्यायस्यापि न तत्र सिद्धिः। तथा चादितिरेवात्री तददितेरदितित्व-मित्यदिति श्रुतेरदितित्वलिङ्गाच्च। तदुक्तं न्यायविवरणे। श्रुतिर्लिङ्गं च आदितिशब्दोऽदितित्वं चेति।

नन्वत्र टीकायामुक्तन्यायेन श्रुतेः सावकाशत्वे शंकिते तामनुक्त्वा लिङ्गमुक्त्वा नह्यदितिभिन्नस्यादितित्वमितिलिङ्गस्यनिरवकाशत्वं चोक्तम्। तत्कथम्। अदितिश्रुतेर्ब्रह्मणि मुख्यत्वेऽमुख्यत्वेवा अदितित्वलिङ्गस्यापि तत्र मुख्यस्यामुख्स्य वा संभवादितिचेदुच्यते। तीरादौ गङ्गादिपद-प्रयोगेपि तीरे गङ्गात्वमित्यप्रयोगात् श्रुतेर्ब्रह्मण्यमुख्यत्वेन संभवेपि लिङ्गस्यामुख्यत्वेनाप्यसम्भव इति टीकाभिप्रायः। यद्वा अतरधिकरण-न्यायेन रूढिबाधेन श्रुतेर्ब्रह्मपरत्वसंभवेपि "अनश्नन्" इत्यादिश्रुत्याऽ-नत्तुर्ब्रह्मणोत्तृत्वरूपादितित्वलिङ्गं न संभवतीति टीकाभिप्रायः।

न च कर्मफलात्तृत्वसाधकेनोत्तराधिकरणेन अत्रत्यानत्तृत्वशंका दंडापूपनयपराहतेति वाच्यम्। तत्रात्रसिद्धमत्तृत्वसामान्यमुपेत्य कर्म-फलात्तृत्वरूपस्तद्विशेषो नेति या शंका तस्या निरसिष्यमाणत्वेनात्रत्य पूर्वपक्षदशायां तत्रत्यसिद्धान्तानुन्मेषात्। अत एव तत्र भाष्ये विशेषा-क्षेपार्थं "सर्वात्तैकः पर उक्त" इत्यत्तृत्वसामान्यानुवादः। अथवा वक्ष्यमाणरीत्यात्र विष्णुलिङ्गाभावेनांतरधिकरणन्यायाविषयतया अदिते-रित्यत्रैवादितित्वमित्यत्राप्यदितिप्रातिपदकस्य प्रसिद्धादितिपरत्वात्ततः परेण त्वप्रत्ययेनापि तद्गतधर्म एव वक्तव्यः। एवं च "तदब्धोदधित्वम्" इत्यादाविव प्रसिद्धादित्युद्देशात्प्रसिद्धार्थ एव शब्दान्वाख्यानस्य कांक्षि-तत्वाच्च श्रुतिर्लिङ्गं च निरवकाशमिति न्यायविवरणाभिप्रायः। अत एव न्यायविवरणस्थ चशब्दस्वारस्यम्। टीकायां श्रुतेः सावकाश-त्वोक्तिस्तु सजातीयदेवतावाचिशब्दसमन्वयस्य सिद्धत्वमभिप्रेत्येति द्रष्टव्यम्। श्रुतौ सर्वशब्दस्त्वदित्यदनयोग्यसर्वपरः। स्वीकृतश्च सिद्धांतिनाप्यत्रैव प्रकरणे सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमदितेरदितित्वं वेदेत्युत्तरवाक्यस्थसर्वशब्दस्य संकोचः। यद्वा श्रुतिबलाददितेरेवासंकुचितसर्वात्तृत्वमस्तु। अत्र चाद्यः पक्षः अदिति-रपि स्वभोग्यस्यान्नपानादेर्भोक्त्रीति सुधोक्तः। द्वितीयस्त्वत्र टीकायाम्, न चाद्यपक्षे भाष्यस्थजन्मादिसूत्रोक्तासंकुचिनसर्वसंहर्तृत्वस्याति-व्याप्त्युक्तिरयुक्तेति वाच्यम्। अदितेः स्वातंत्र्येण कतिपयसंहर्तृत्वे

ब्रह्मणः सर्वसंहर्तृत्वायोगेन कतिपयसंहर्तृत्वस्य लक्षणत्वेनातिव्याप्तिसंभवात्। न चादेर्भक्षणार्थत्वेनादितेरत्तृत्वेपि पक्षद्वयेपि संहर्तृत्वस्य नातिव्याप्तिरिति शंक्यम्। "मृत्युनैवेदं" इत्युपक्रमे मृत्युशब्दात् "यद्यदेवासृजत तत्तदत्तु" इति च सृष्टिप्रतियोगित्वाद्भक्षणस्यापि संहार विशेषत्वादूर्णनाभ्यादिवच्च भगवतः संहर्तृत्वस्यात्तृत्वरूपत्वात्। "अद्यतेत्ति च भूतानि—

ससर्गकाले च करोति सर्वं संहारकाले तु तदत्तिभूयः। स्रष्टा पाता तथैवात्ते" इत्यादौ संहारेऽदधातुप्रयोगाच्च। अत एव टीकायां "संहर्तृत्वापरपर्यायमत्तृत्व" इत्युक्तम्।

नैवेह किंचनाग्र आसीदित्यादिनास्य प्रकरणस्य वैष्णवत्वेपि दर्शपूर्णमासप्रकरणात् "पूषाप्रपिष्टभाग" इत्युक्तं पौष्णं पेषणमिव विष्णुप्रकरणात् "तददितेरदितित्वं" इत्यादिकमुत्कृष्यताम्। प्रकरणाच्छ्रुतिलिङ्गयोर्बलीयस्त्वात्। अथवा यथा "अभिक्रामन् जुहोती"ति दर्शपौर्णमासप्रकरणे श्रुतस्याभिक्रमणस्य तदंगप्रयाजान्वयार्थं प्रयाजस्यावांतरप्रकरणं तथा विष्णुप्रकरणेदितेरवांतरप्रकरणमस्तु। यद्वा अदितिश्रुतिबलान्नैवेहेत्यादिमहाप्रकरणमप्यदितेरेवेति॥

सिद्धांतस्तु॥

सर्वात्तृत्वादिकं नैव विष्णोरन्यस्य युज्यते।
विष्णावदितिशब्दस्तु श्रुतः श्रुत्यंतरे स्फुटम्॥१॥
न च बाधं विना सर्वशब्दसंकोचमर्हति।
पूषादिवच्च नात्रास्ति बाधो येनापकर्षणम्॥२॥
अवांतरप्रक्रिया तु सन्दंशात्कल्प्यते स च।
अभिक्रामन् जुहोतीति वाक्येस्ति प्रकृते तु न॥३॥

भाष्योक्तश्रुत्यादिना सर्वात्तृत्वं निरवकाशम्। अन्वाख्यानपक्षेपि देवमातरि रूढिबाधार्थमिह सर्वात्तृत्वमेवादिति शब्दप्रवृत्तिनिमित्तमिति श्रुत्या स्वयमेवोक्तत्वाददितिश्रुतिरदितित्वलिङ्गं च विष्णावेव मुख्यम्। न चाबाधे श्रुत्युक्तं निमित्तं त्यागार्हम्। अनश्नन्नित्यादेस्तूत्तराधिकरणे गतिर्वक्ष्यते। "यदेनमधिनोत्तद्दध्नो दधित्वं" इत्यादि तु यदि प्रसिद्धदधिविषयं तर्हि जातिनिमित्तकस्य दधिशब्दस्येदमन्वाख्यानमात्रम्। यदि

त्वप्रसिद्धविषयं तद्ध्यबाधान्निमित्तपरमेव । युक्ता चादितिशब्दस्य "अदितिर्हीदं सर्वं यदिदं किंच, अदितिर्देवतामयी" इत्यादौ ब्रह्मणि प्रयोगात्तत्रनिमित्ताकांक्षा। नहि लौकिकप्रयोग एवाकांक्षा निमित्तम्। "यदाजिमीयुस्तदाज्यानामाज्यत्वं" इत्यादावदर्शनात्। किंच।

पूर्वत्रादिति शब्दस्याप्रयोगान्नानुशासनम्।
शब्दस्तु किंतु पूर्वोक्तात्तृत्वे हेतुरिहोच्यते ॥ १॥

न हीह पूर्ववाक्येऽदितिशब्दः प्रयुक्तः। येन तदनुशासनं युक्तं-स्यात्। नच तत्तदत्तुमिति पूर्वप्रतिज्ञातसर्वात्तृतायां श्रुत्यंतरे ब्रह्मणि प्रयुक्तस्य सर्वात्तृत्वनिमित्तकस्यादितिशब्दस्य हेतूकरणे संभवति स्थलांतरस्थादितिशब्दस्य निर्वचनं युक्तम्। अत एव टीकायां विषय-वाक्यार्थोक्तिदशायां हेतुत्वमुक्तम्। एवं च न सर्वशब्दस्य संकोचः बाधकाभावात्। पूर्ववाक्ये स यद्यदेवासृजत तत्तदत्तुमिति वीप्सया-कृत्स्नोक्तेश्च। सर्वस्यैतस्यात्तेत्यादौ तु सर्वशब्दस्य बाधकवशात्संकोचः। अत एव सूत्रे लाघवाय श्रुत्यनुगमाय च सर्वशब्दे प्रयोक्तव्येपि सर्व-शब्दस्य संकोचनिरासाय चराचरशब्दः प्रयुक्तः। न चाबाधेपि प्रकरणा-दुत्कर्षः। अभिक्रमणस्यावांतरप्रकरणं च तस्य प्रयाजविषयैर्वाक्यैः पूर्वं-पश्चाच्चसंदष्टत्वात्। न चात्तृत्वस्यादितिविषयैर्वाक्यैः संदंशोस्ति। अदितेरेव महाप्रकरणमिति तु "नेहासीत्किंचन" इत्यादिभाष्योक्तस्मृत्यैव निरस्तम्। तदेतदभिप्रेत्योक्तं न्यायविवरणे "संदिग्धश्रुतिलिङ्गाभ्यां निश्चितयोर्लिङ्ग प्रकरणयोरेव बलवत्त्वं" इति। अत्र चाद्ये सूत्रे लिङ्गोक्तिः द्वितीये तु प्रकरणोक्तिरिति स्फुटः सूत्रक्रमः॥

अत्र परैरुक्तं—

"यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः।
मृत्युर्यस्योपसेचनं . .. ...॥

इति काठकवाक्ये ओदनोपसेचनपदाभ्यां सूचितोऽत्ता जीव एव। अत्तृत्वस्य भोज्यतया प्रसिद्धौदनसंबन्धेन भोक्तृरूपत्वात्। ब्रह्मणश्चा-भोक्तृत्वादिति प्राप्ते सत्यमभोक्तृ ब्रह्म। तथापि तदेवात्तृ। अत्तृत्वस्य संहर्तृत्वरूपत्वात्। तस्याविक्रये शुद्धे ब्रह्मण्यसंभवेपि मायोपाधिके संभवात्। भक्तवाचिनश्चोदनशब्दस्य भोक्तृप्रतियोगिभोज्यत्वं न मुख्यवृत्त्यार्थः। अमुख्यवृत्त्या चेत्तर्ह्योदनगतं संहर्तृप्रतियोगिसंहार्यत्वमे-

वार्थोऽस्तु। एवं च ब्रह्मक्षत्रादिपदानां न मुख्यार्थत्यागः, जीवपक्षे तु तत्त्यागः। न हि कश्चिदपि जीवः सर्वस्य ब्रह्मक्षत्रस्य मृत्योश्च भोक्ताऽस्तीति सिद्धान्त इति। अत्र ब्रूमः—

भोक्तृताऽपि विशिष्टेऽस्तु यथा संहर्तृता तव।
अभोक्तृत्वं निविशतां शुद्धे कौटस्थ्यवत्सुखम्॥

अभोक्तृत्वश्रुतेर्निर्विकारत्वश्रुतिवच्छुद्धविषयत्वसम्भवेन मायोपाधिके संहर्तृतेव भोक्तृताऽप्यस्तु। एवं च ब्रह्मक्षत्रादिशब्दानां न मुख्यार्थत्यागः, तद्भोक्तृत्वस्य ब्रह्मणि सम्भवात्, ओदनादिपदोपस्थापितस्यान्तरङ्गस्य भोज्यत्वस्यापि न त्यागः। न हि 'अग्निर्माणवकः' इत्यत्राग्निशब्दः पैङ्गल्यादिकमिव द्रव्यत्वाद्युपस्थापयति, न वा "प्रोद्गातृणां" इत्यत्रोद्गातृशब्दोऽन्तरङ्गभूतान् प्रस्तोत्रादीनिव षोडशर्त्विजो लक्षयति, येनात्राप्योदनशब्दः संहार्यत्वमुपस्थापयेत्। अपि च "सर्वं वा अत्ति" इति मदीयविषयवाक्य इव त्वदीये वाक्ये सूत्रे प्रतिज्ञार्तोऽक्ता हेतूकृतं चराचरग्रहणं च न साक्षादस्ति॥ यच्चोक्तं परैः—"प्रकरणात्" इति सूत्रस्य "न जायते म्रियते वा विपश्चित्" इति परमात्मन एव प्रकृतत्वाच्च स एवात्तेत्यर्थ इति, तन्न, "न जायते" इत्यास्मादुत्तरवाक्ये "न हन्यते हन्यमानेऽपि देहे" इति देहसम्बन्धस्य,

हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्।
उभौ तौ न विजानीतः ..........॥

इति हन्तृत्वादिभ्रान्तेश्च जीवलिङ्गस्य दर्शनेन "न जायते" इत्यादेर्जीवविषयत्वात्। अत्रापि परमतेऽप्यत्तुर्जीवत्वं निषिद्ध्य ब्रह्मत्वोक्तेस्तदैक्यप्रतिकूलता व्यक्तैव॥

टीकाक्षरार्थस्तु—इति योजनायामस्ति चोद्यावकाश इति। यद्यपि "स यद्यदेव" इत्यत्र 'सः' इत्यस्य संवत्सराख्यचतुर्मुखपरत्वमेव बृहदारण्यकभाष्ये उक्तम्, 'यद्यद्ब्रह्मासृजत्पूर्वं तत्तदत्ति जनार्दनः।' इति स्मृतेः। उत्तरत्र "सोऽकामयत भूयसा यज्ञेन भूयो यजेय" इत्यादौ चतुर्मुखपरत्वदर्शनाच्च। पूर्वत्रापि "स तया वाचा तेनात्मना" इति प्रथमान्तोक्तमृत्युतोऽपि तृतीयान्तोक्तसंवत्सरस्याव्यवधानेन प्रकृतत्वाच्च। संवत्सरस्रष्टमत्तुमेव मृत्योस्संवत्सरादनान्निवृत्ततया संवत्सरस्यैव स्रष्टृत्वस्योचितत्वाच्च। कर्तुरपि संवत्सरस्य भगवत्स्वातन्त्र्यविवक्षया 'तेन'

इति करणत्वेन निर्दिष्टस्यापि 'सः' इति कर्तृत्वेन निर्देशोपपत्तेश्च। तथाऽपि समानविभक्तिकत्वं परामर्शे तन्त्रमिति भ्रमेण 'स इत्यनेन आदित्याख्यमृत्योरेव परामर्श इति पूर्वपक्षे पुल्लिङ्गानुपपत्तिचोद्याव-काशोऽस्त्येव। ननु तथाऽपि न चोद्यावकाशः, "स ऐक्षत" इत्यादौ पुल्लिङ्गेनैव तच्छब्देन 'मृत्युना' इति मृत्युशब्देन च प्रस्तुततया 'गुरोर्दारास्समागताः, ते पूज्याः' इत्यादाविव पुल्लिङ्गोपपत्तेः। न च "अशनायां हि मृत्युः" इति स्त्रीलिङ्गेन अशनायाशब्देन प्रस्तुतत्वात् 'सः' इति पुल्लिङ्गानुपपत्तिरिति वाच्यम्, तथात्वे सिद्धान्तेऽपि तदनु-पपत्तेरिति चेत्, उच्यते—दारखट्वादिशब्देषु पुल्लिङ्गस्त्रीलिङ्गादेश्शब्द-साधुतैव, न त्वर्थसाधुता। न चार्थसाधुत्वे सम्भवति शब्दसाधुत्वमात्रं युक्तम्। एवं चादितौ पुल्लिङ्गो मृत्युशब्दोऽप्ययुक्तः। परमपुरुषे तु स्त्रीलिङ्गोऽप्यदितिशब्दः प्रकृत्यधिकरणन्यायेन युक्तः। तथा चास्ति चोद्यवकाश इति भावः। अदितिशब्दवाच्यमिति। अदितिशब्द-प्रवृत्तिनिमित्तमित्यर्थः॥ ॥ इत्यत्तृत्वाधिकरणम्॥ २॥

---

अथ गुहाधिकरणम्

## ॥ ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ॥

पूर्वत्रादितिप्रातिपदिकश्रुतिबलादन्यत्रप्रसिद्धक्रियालिङ्गसमन्वय उक्तः, अत्र तु 'पिबन्तौ' इति प्रत्ययश्रुतिबलादन्यत्रप्रसिद्धक्रियालिङ्गसमन्वय उच्यत इत्यवान्तरसङ्गतिः। अत्र पिबन्तौ किं जीवेश्वरौ किं वा ईश्वररूप-विशेषौ इति चिन्ता। तदर्थं गुहावेशब्रह्मशब्दादिकं किममुख्यम् किं वा मुख्यमिति। तदर्थं पिबत्प्रातिपदिकार्थभूतं भोक्तृत्वं किं ब्रह्मणि न युक्त-मुत युक्तमिति। तदर्थमभोक्तृत्वश्रुतिः ब्रह्मणि भोक्तृत्वमात्रनिषेधपरा उताशुभभोक्तृत्वनिषेधपरेति। तथा द्विवचनं किं ब्रह्मणि न युक्तमुत युक्तमिति॥

पूर्वपक्षस्तु—युक्तं पूर्वोक्तमत्तृत्वं ब्रह्मणि, प्रातिपदिकार्थस्य संहर्तृत्वस्य प्रत्ययार्थस्यैकत्वस्य च सम्भवात्। इह तु प्रातिपदिकार्थः कर्मफलभोक्तृत्वं प्रत्ययार्थो द्वित्वं च कर्मबन्धरहिते निर्भेदे च ब्रह्मणि न युक्तम्। अन्यथा "सप्तदश प्राजापत्यान् पशूनालभते" इत्यादौ

सिद्धान्तस्तु—गुहावेशाद्ब्रह्मशब्दात् सेतुत्वादक्षरत्वतः ।
पारत्वादभयत्वाच्च ब्रह्मैवात्र निगद्यते ॥

गुहानिहितत्वं यद्यपि जीवेऽप्यस्ति, तथापि "यो वेद निहितं गुहायाम्" "गुहाहितं गह्वरेष्ठं पुराणं" "गुहां प्रविश्य तिष्ठन्तं" इत्यादिश्रुतिषु ब्रह्मण्येव तस्य प्रसिद्धत्वात्, तेन ब्रह्मत्वसिद्धिः। न हि 'मैथिलः' इत्युक्तेः यः कश्चिन्मिथिलाभवो भासते, किन्तु यस्तत्र प्रसिद्धस्तदधीश्वरः।

यस्सेतुरीजानानामक्षरं ब्रह्म यत्परम् ।
अभयं तितीर्षतां पारं ..........॥

इत्युत्तरवाक्ये च पारत्वेन विशेषणात् परब्रह्मण्येव ब्रह्मशब्दः। सेतुत्वादिकं तु "एष सेतुः" इत्यादिश्रुतिभिः ब्रह्मलिङ्गत्वेन निश्चितम्। न चोत्तरत्र "यस्सेतुः" इत्यादिभिः, पूर्वत्र च "यस्य ब्रह्म च क्षत्रं च" इत्यादिभिः ब्रह्ममात्रविषयैर्वाक्यैः सन्दष्टं "ऋतं पिबन्तौ" इत्यादिकं बाधकाभावेऽप्यब्रह्मविषयमिति युक्तम्। न चेश्वरस्य अभोक्तृत्वमेव बाधकम्, "एतत्सर्वं परेआत्मनि संप्रतिष्ठते" इति प्रस्तुत्य "एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता" इत्यादि श्रुतेः।

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥

इत्यादिस्मृतेश्च। न च "श्रोत्रं" इत्यादिकं जीवविषयं, पूर्वत्र "यच्चाप्युत्क्रामतीश्वरः" इत्यादेः, उत्तरत्र च "पश्यन्ति ज्ञानचक्षुषः" इत्यादेरयोगात्। "अनश्नन्नयः" इत्यादिकं तु "तस्येदाहुः पिप्पलं स्वाद्वग्रे" इतीश्वरस्य स्वादुभोक्तृत्वोक्तेः, तथा "प्रविक्तहारतर इव भवत्यस्माच्छारीरादात्मनः" इति श्रुत्यन्तरे भगवदाहारस्य जीवाहाराद्विविक्तत्वोक्तेः, तथा "शुभं पिबत्यसौ" इत्यादिभाष्योक्तस्मृतिभिरशुभभोगस्यैव निषेधात्, तथा—

अन्यूनानधिकत्वाच्च पूर्णस्वानन्दभोजनात् ।
विरागाच्च परस्यास्य भोक्तृत्वप्रतिषेधनम् ॥

इत्यादिस्मृतिभिरभोक्तृत्वश्रुतेर्गतिकथनात्, "क्रीडा भोगो न चान्यथा" इत्यादिस्मृत्या क्रीडारूपभोगसम्भवस्योक्तत्वाच्च अशुभभोगाभावविषयम्।

प्रत्युत जीवपक्ष एव "ऋतं सत्यं तथा धर्मः" इति स्मृतेर्द्धर्मफलवाचि ऋतपदं न युक्तम्, तस्याधर्मफलं प्रत्यपि भोक्तृत्वात्। ईशपक्षे तु तद्युक्तम्, "पुण्यमेवामुं गच्छति" इति श्रुतेः। नापीशपक्षे द्विवचनानुपपत्तिः, यतः—यथैकस्मिन्नेव पाशेऽदितिः पाशानिति श्रुतिः।

तथैकस्मिन्नीश्वरेऽस्तु पिबन्ताविति वागपि॥

यथा नवमे द्विबहुपत्नीकेष्वपि प्रयोगेषु "पत्नीं सन्नह्य" इत्येकवचनान्तो मन्त्रः, यथा वाऽग्नीषोमीयपशुसम्बन्धिन्येकस्मिन्नेव पाशे "अदितिः पाशान्" इत्यग्नीषोमीयपशुप्रकरणस्थमन्त्रगतं बहुवचनम्। अन्यथा हि बहुपाशयुक्तेषु पशुगणेषु पाशमन्त्रस्योत्कर्षः स्यात्। स च नेष्टः, गुणभूतप्रत्ययार्थबहुत्वस्यानुसरणाय तदाश्रयत्वेन प्रधानभूतप्रातिपदिकार्थोत्कर्षायोगेन एकस्मिन्नपि बहुवचनस्य कथंचिन्नेयत्वात्। तथा इहापि एकस्मिन्नपि ब्रह्मणि द्विवचनमन्येन सह द्वित्वादस्तु, अस्यापि ब्रह्मप्रकरणस्थत्वात्। "युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्" इति श्रुतं यजमानद्वित्वादि तु द्व्यादिप्रातिपदिकार्थत्वात् सङ्ख्यानभिधानेपि कारकाभिधानेन प्रत्ययस्य सार्थक्यवत् प्रातिपदिकस्य सार्थक्यासंभवात्, रामकृष्णावित्यादाविव च प्रकृते रूपविशेषेणेव यजमाने रूपविशेषेण द्वित्वासम्भवाच्च एकयजमानकदर्शपूर्णमासप्रकरणादुत्कृष्टम्। "यस्मिन् पञ्च पञ्च जनाः" इत्यत्र तु बहुत्वस्य प्रातिपदिकार्थत्वेऽपि ब्रह्मणो बहुरूपत्वाददोषः।

ननु "प्रोद्गातृणां" इत्यत्रेव विभक्त्यर्थानेकत्वानुग्रहाय प्रकृतेऽपि च्छत्रित्वप्रातिपदिकलक्षणैव युक्तेति चेत्, न तत्रैव प्रकरणे उद्गातृशब्दलक्षणीयानां प्रस्तोत्रादीनां छन्दोगानामिवात्र ब्रह्मप्रकरणे लक्षणीयस्यान्यस्याभावात्। अत एव 'पाशान्' इत्यत्र बहुत्वाय प्रातिपदिकलक्षणा नाश्रिता। उद्गातृपदेन च्छन्दोगानामिव पाशशब्देन बन्धकद्रव्यलक्षणायां प्रकरणे बन्धकबहुत्वस्याभावात्, यागसाधनद्रव्यमात्रलक्षणायां च पाशमन्त्रस्थस्य 'प्रमुमोक्तु' इत्यस्यानन्वयात्। किञ्च—यद्यपि टीकायां 'यौ गुहां प्रविष्टौ तौ छायातपौ वदन्ति' इत्युक्तत्वेन 'छायातपौ' इत्यनेनोक्तं द्वित्वं विधेयविशेषणम्, तथापि "अग्नीनादधीत" इत्यादौ बहुत्वस्य उद्देश्यविशेषणत्वेऽपि विविक्षादर्शनेन "सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्" इत्यत्र च बहुत्वस्यविधेयविशेषणत्वेऽपि अविवक्षा-

दर्शनेन निर्ज्ञातविशेषणत्वमेवाविवक्षायां तन्त्रमिति ग्रहैकत्वनये स्थितत्वादिह च "यस्य ब्रह्म च क्षत्रं च" इत्यादिपूर्ववाक्ये 'यस्य' इत्येकवचनेनैकत्वसङ्ख्याया निर्ज्ञातत्वात् द्वित्वस्य अविवक्षास्तु। "सप्तदश प्राजापत्यान्" "द्वा सुपर्णा" इत्यादौ तु प्रागेकत्वस्यानवधृतत्वात् "अनश्नन्नन्यः" इत्यादिवाक्यशेषाद्यनुसाराच्च भेद आश्रितः। न ह्यौत्सर्गिकस्य क्वचिदपवादेनान्यथात्वे सर्वत्रापि तथात्वं युक्तम्।

उक्तं ह्यनुव्याख्याने—

उत्सर्गतोऽपि यत्प्राप्तमपवादविवर्जितम्।
व्यभिचार्यपवादेन मानमेव भविष्यति॥

इति। अत्र तु गुहाप्रवेशादिना ब्रह्मत्वेन निश्चितस्य पातुः पूर्वत्र "यस्य ब्रह्म च क्षत्रं च" इति, "मृत्युर्यस्य" इति, "क इत्था" इति, उत्तरत्र च "यस्सेतुः" इत्याद्येकवचनाच्चैकत्वमधृतम्। अत एव "एकादश प्रयाजान् यजति" इत्यत्र पञ्चप्रयाजानामेवावृत्त्या एकादशत्वमित्युक्तं पञ्चमे। नवमेऽपि "अतिजगतीषु स्तुवन्ति" इति बहुवचनं "विश्वा पृतना" इत्येकस्यामेव अतिजगत्यां ऋचि सप्तकृत्वोऽभ्यासमात्रेण, न तु जगतीव्यक्तिबहुत्वेनेत्युक्तम्। किञ्च—

सम्बन्धादि यथैकस्मिंस्तथाऽनेकत्वमिष्यताम्।
प्रमितत्वाद्विरोधं तु विशेषो वारयिष्यति॥

दृश्यते हि 'प्रमेयत्वं प्रमेयम्" "आनन्दो ब्रह्मणः" 'भेदो भिन्नः' इत्यादावेकस्मिन्नेव विशेषणविशेष्यभावेन सम्बन्धः। "नेह नाना" इत्यादिना तु ब्रह्मणि भेद एव निषिद्धः, न त्वनेकत्वसङ्ख्या। प्रत्युत "अयं वै हरयोऽयं वै दश च सहस्राणि च बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तम्" इत्यादिश्रुत्या हि सा विहिता। विरोधं तु भेदप्रतिनिधिर्विशेषो वारयिष्यति। किञ्च ब्रह्मण आनन्दमात्रात्मकत्वे तत्स्फुरणाभावः, ज्ञानमात्रात्मकत्वे आनन्दाभावः इत्युभयथाऽपि मोक्षस्यापुरुषार्थत्वं स्यात्, परमतेऽपि सुखप्रकाशस्य पुरुषार्थत्वात्, ज्ञानानन्दोभयात्मकत्वे तु सिद्धमेकस्याप्यनेकत्वम्। एवं च यथा नवमे "मेधपतये मेधं मेधपतिभ्यां मेधम्" इत्यत्र मेधपतिशब्दार्थयोरग्नीषोमयोरेकवचननिर्वाहाय देवतात्वेनैकत्वम्, देवतात्वस्य व्यासक्तत्वात्, द्विवचननिर्वाहाय तु देवतात्वाधिष्ठानरूपेण द्वित्वमिति द्वित्वैकत्वयोस्समुच्चयः,

तथेहापि ब्रह्मणस्स्वरूपेणैकत्वं रूपविशेषेण तु द्वित्वमिति श्रौतयोर्द्वित्वैकत्वयोः समुच्चयोस्तु, "इन्द्रोमायाभिः पुरुरूप ईयते" "यदेकमव्यक्तमनन्तरूपम्" "एकं रूपं बहुधा यः करोति" "पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः।" इत्यादिश्रुतिस्मृतिभिरेव समुच्चयावगतेः। तदेतदभिप्रेत्योक्तमनुव्याख्याने—"द्वित्वं चैकस्य युज्यते" इति।

न्यायविवरणे च—"द्विवचनश्रुतेरपि न निरवकाशत्वं, विष्णोरेव द्विरूपत्वात्" इति। "न सङ्ख्योप्रसङ्ग्रहादपि नानाभावात्" इत्यत्र तु निर्भेदस्य ब्रह्मणः आधाराधेयभावानुपपत्त्याशङ्का निर्भेदत्वेऽप्यनेकत्वस्यापि सत्त्वात् तन्मात्रेणाधाराधेयभावोपपत्तिरिति समाधास्यते, न तु अत्रेव एकस्यानेकत्वानुपपत्त्या, येन पुनरुक्तिः स्यात्। अत एव तत्र टीका "आधाराधेयत्वादिलिङ्गेन अन्यत्रैव प्रसिद्धानां पञ्चजनादिशब्दानां" इति।

यद्वा एकस्यानेकत्वमपि तत्र सिद्धान्ते व्युत्पाद्यम्। अत एव तत्र "बहुरूपत्वादधिकरणाधेयत्वादिकं तस्यैव युज्यते" इति न्यायविवरणे अनेकत्वसंङ्ख्योक्तयर्थ आदिशब्दः। अत्र तु कर्मबन्धरहितस्यापि भोक्तृत्वमात्रमिति भेदः। तत्राऽऽद्यपक्षे "न संख्या" इति सूत्रे सङ्ख्योपसङ्ग्रहशब्दोक्ता एकस्यानेकत्वानुपपत्तिः पूर्वपक्षेऽभ्युच्चययुक्तिः, अपिशब्दोक्ताधाराधेयभावानुपपत्तिस्तु मूलयुक्तिः। द्वितीयपक्षे तु "गुहां प्रविष्टौ" इति सूत्रे "आत्मानौ हि" इति द्विवचनेन आत्मान्तरात्माख्यरूपद्वयोक्तिः सिद्धान्तेऽभ्युच्चयुक्तिः, आदेयं मातीति व्युत्पत्त्या आत्मशब्दोक्तं शुभभोक्तृत्वं मूलयुक्तिः।

यद्वा—अत्र भोक्तृत्ववदनेकत्वे व्युत्पादिऽपि न तत्र केवलं आधाराधेयभावानुपपत्तिशङ्का, किन्तु द्वित्वयुक्तास्तु ब्रह्मत्वं, गुहाप्रविष्टत्वादिलिङ्गात्, पञ्चत्वयुक्ते तु न ब्रह्मलिङ्गाद्यस्ति, इत्येकस्यानेकत्वानुपपत्तिरूपसामान्यन्यायस्य अनपवाद इति शङ्का, "प्राणस्य प्राणम्" इत्यादि ब्रह्मलिङ्गानि सन्तीत्यादि समाधानं चेत्याद्यूह्यम्। "नाणुरतच्छ्रुतेः" इत्यत्र तु "व्याप्ता ह्यात्मनश्चेतनाः" इति वाक्ये ब्रह्मलिङ्गाभावात् आपादनरहितबहुत्वेन जीवस्य प्राप्तत्वात् व्याप्त्यणुत्वश्रुत्योर्विरोधे शङ्किते, "स आत्मेदं सृजति" इत्यादिपूर्ववाक्ये ब्रह्मलिङ्गसद्भावात् "तदयं प्राणोऽधितिष्ठति" इत्यत्रैकवचनेन निर्दिष्टे "आ तेन यातं" इति द्विवचनवदत्रापि "स आत्मा" इत्येकवचननिर्दिष्टे "व्याप्ता ह्यात्मनः"

इति बहुवचनं, ततो न विरोध इति वक्ष्यत इति न तेनापि गतार्थता। सुखदुःखहेतुत्वरूपं गौणं छायाऽऽतपत्वं च प्रतियोगिभेदेन अविरुद्धम्। अत्र च सूत्रे यद्यपि समन्वेतव्यं ऋतपातृत्वं "ऋतं पिबन्तौ" इति साक्षादेव वक्तव्यम्, तथाऽपि गुहाप्रविष्टत्वहेतुरूपमपि वक्तुं ऋतपातृत्व-समानाधिकरणगुहाप्रविष्टत्वोक्तिद्वारा तदुक्तिः।

यद्यपि चात्र "तत्तु समन्वयात्" इत्यतोऽनुषक्तस्य तच्छब्दस्य पूर्वत्राऽऽनन्दमयस्तद्ब्रह्मेत्यादिरूपेण अन्वयवत् उत्तरत्राप्यन्तस्तद्ब्रह्मेत्यादि-रूपेण अन्वयवच्च अत्राप्यन्वयस्सिद्धः, तथाऽपि सूत्रे श्रौतद्विवचनस्य गतिं वक्तुं आत्मान्तरात्माख्यरूपद्वयवाचिद्विवचनान्तात्मशब्दप्रयोगः। अत्र च विषयवाक्यक्रमात्सूत्रक्रमः॥

अन्ये तु—ऋतं पिबन्तौ बुद्धिजीवौ, गुहाप्रविष्टत्वादेस्तत्र सम्भ-वात्सर्वगते ब्रह्मण्यसम्भवाद्बुद्धेरपातृत्वेऽपि छत्रिन्यायेन पिबच्छब्द इति प्राप्ते, ऋताख्यकर्मफलपानलिङ्गेन एकस्य जीवत्वे निश्चिते द्वितीयस्त-ज्जातीयश्चेतनः परमात्मैव, न त्वचेतना बुद्धिः, 'अस्य गोर्द्वितीयेन भाव्यम्' इत्युक्ते गवान्तरेणेव अश्वादिना सद्वितीयत्वाप्रतीतेः। एवं च प्रथमावगतऋतपानेन पिबतोर्जीवात्परमात्मत्वे निश्चिते चरमं गुहाप्रविष्ट-त्वादिकं कथंचिन्नेयम्। ब्रह्मणोऽपातृत्वेऽपि छत्रिन्यायेन पिबच्छब्द इति सिद्धान्त इत्याहुः। अत्र ब्रूमः—

बुद्धिस्थत्वाद्द्वोक्तृतादेः पिबन्त्स्याच्चेतनः कथम्।
चित्त्वेऽपि द्वित्वपूर्वस्याबाधार्थं सद्वितीयता॥
विरूपयाऽपि बुद्ध्याऽस्तु किञ्च बुद्धेस्सरूपता।
वर्तते सह जीवेन पारतन्त्र्यादिरूपतः॥

त्वन्मते जपाकुसुमगतस्य लौहित्यस्य स्फटिक इव बुद्धिगतस्य कर्तृत्वभोक्तृत्वादेः जीवेऽध्यासात्, कथं पातृत्वलिङ्गेनैकस्यापि चेतन-त्वम्, येन तत्साजात्येन द्वितीयोऽपि चेतनः स्यात्। न हि लोके देहे आत्मत्वमध्यस्तमिति "आत्मा द्रष्टव्यः" इत्यादिश्रुतावात्मशब्दो देहपरः। भोक्तृत्वादेश्चिदचित्संवलनधर्मत्वे चान्योन्यधर्माध्यासोक्तिरयुक्ता स्यात्। एवं च परमते बुद्धेरेव पातृत्वेन प्रकृत्यर्थसम्भवात्, ज्ञानक्रियाशक्तिभेदेन प्रत्ययार्थस्य द्वित्वस्यापि कथञ्चित्सम्भवात्, प्राणसहिता बुद्धिरेव 'पिबन्तौ' इत्युच्यताम्। अथ द्वित्वे स्वारस्यमपेक्षसे, तर्हि आरोपितेन

पातृत्वेन युक्तो जीवो बुद्धेर्द्वितीयः स्यात्, न तु तेनापि रहितं ब्रह्म। अथ श्रुतेरारोपितविषयत्वं न सहसे, तर्हि च्छत्रिन्यायेन पातृत्वरहितं सजातीयं जडान्तरमेव बुद्धेर्द्वितीयमस्तु, चेतनस्य परमात्मनस्तु न कथञ्चिदनुप्रवेशः। अस्तु वा जीवस्य पातृत्वम्, तथाऽपि 'गोर्द्वितीयेन' इत्यत्र द्वित्वस्य मुख्यस्य लाभात् सजातीयग्रहणम्। इह तु ब्रह्मग्रहणे जीवस्य ब्रह्माभेदात् न तात्त्विकं द्वित्वम्। तथाच यथा 'चन्द्रः स द्वितीयः' इति प्रमाणवाक्याद्विजातीयस्याप्यकल्पितभेदस्य नक्षत्रादेरेव धीः, न तु सजातीयस्यापि कल्पितभेदस्य चन्द्रान्तरस्य, तथाऽत्रापि चेतनत्वेन जीवस्य सजातीयत्वेऽपि कल्पितभेदस्य ब्रह्मणो न धीः, किन्तु विजातीयत्वेऽपि धर्मिसमसत्ताकभेदाया बुद्धेरेव। न हि द्वित्ववत् साजात्यं शाब्दम्, येन तदनुरोधेन द्वित्वं बाध्येत। अपि च 'अस्य जरठस्य गोर्द्वितीयेन बलवता भाव्यम्' इत्युक्ते चरमस्यापि शाब्दस्य बलवत्त्वस्याबाधार्थं प्रथमेन जरठत्वेन तदाक्षिप्तदुर्बलत्वेन वा साजात्यस्येव प्रकृतेऽपि चरमस्यापि शाब्दस्य गुहाप्रविष्टत्वस्य अबाधार्थं प्रथमपातृत्वाक्षिप्तेन चेतनत्वेन साजात्यस्यैव बाधोऽस्तु। न हि "यो वेद निहितं गुहायाम्" इत्यादिश्रुतिसिद्धमपि ब्रह्मणो गुहानिहितत्वं "सर्वगतस्य ब्रह्मणोऽर्भकौकस्त्वं न पारमार्थिक"मिति वदतस्तव मते तात्त्विकम्। अस्तु वा जीवस्य ब्रह्मणा सद्वितीयत्वेऽपि द्वित्वादेरबाधः, तथाऽपि कर्मफलभोक्तृत्वेन चेतनत्ववत्पारतन्त्र्यस्यापि आक्षेपात् परतन्त्रा बुद्धिः जीवस्य द्वितीया स्यात्, चेतनस्य भोक्तृत्वनियमाभावेऽपि भोक्तुश्चेतनत्वनियमवत् परतन्त्रस्य भोक्तृत्वनियमाभावेऽपि कर्मफलभोक्तुः पारतन्त्र्यनियमात्। सम्भवति च बुद्धेर्भोगकरणत्वात् 'काष्ठानि पचन्ति' इत्यादाविव कर्तृत्वोपचारः। 'गोर्द्वितीयेन' इत्यत्र तु गोत्वस्य शाब्दत्वात्तेनैव साजात्यं वाच्यमिति नातिप्रसङ्गः। छायातपत्वमपि चेतनाचेतनत्वादिना बुद्धिजीवादौ युक्तम्। किञ्च पूर्वपक्षे सिद्धान्ते च बुद्धौ ब्रह्मणि च छत्रिवल्लक्षणैव, पाता तु जीव एवेति प्रमेये विशेषाभावेन व्यर्था चिन्ता।

मात्रयाऽपि प्रमेयस्य भेदाभावे हि वादिनोः।
शब्दमात्राय कलहो न युक्तो मूर्खयोरिव॥

यच्चोक्तं "विशेषणाच्च" इति सूत्रस्य उत्तरवाक्ये "आत्मानं

रथिनं विद्धि" इति जीवस्य गन्तृत्वेन, सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्। इति परमात्मनश्च गम्यत्वेन विशेषणात् तावेवात्र पिबन्ताविल्यर्थः इति तन्न, जीवस्य रथित्वेन "बुद्धिं तु सारथिं विद्धि" इति बुद्धेश्च सारथित्वेन विशेषणात्तावेव अत्र पिबन्तावित्यपि प्रसङ्गात्। किञ्च 'पिबन्तौ' इत्यस्य लक्षणया ब्रह्मपरत्वेऽपि जीवपरत्वस्यापि सत्वात्, इह चाध्याये "ईक्षतेः" इत्यादौ सदादिशब्दानामन्यपरत्वं निरस्य ब्रह्मपरत्वस्यैवोक्तेरस्याध्यायासङ्गतिः। न चोक्तरीत्याऽस्य साक्षात्सङ्गतिसम्भवे प्रासङ्गिकसङ्गतिर्युक्ता। यथाहुः—"साक्षाद्युक्तं न प्रसज्यते" इति। तदेतभिप्रेत्योक्तं भाष्ये—"न च जीवे समन्वयोऽभिधीयते" इति। अत्रापि परमतेऽपि जीवब्रह्मणोः भोक्तृत्वाभोक्तृत्वाभ्यां भेदसिद्धिः॥

केचित्तु—"अत्ता" इत्यादिचतुस्सूत्री एकमधिकरणम्, एकप्रकरणस्थवाक्यविशेषविषयाणां पादान्तराधिकरणान्तराव्यवहितानामुपजीव्योपजीवकभावेन परस्परान्वितार्थानां सूत्राणां विषयवाक्यभेदे सत्यपि भिन्नाधिकरणत्वायोगात्। "अत्र "अत्ता" इत्यादिसूत्रद्वयविषयभूतं "यस्य ब्रह्म" इत्यादिवाक्यं, "गुहाम्" इत्यादिसूत्रद्वयविषयभूतं "ऋतं पिबन्तौ" इत्यादिवाक्यं एकप्रकरणस्थं उपजीव्योपजीवकभावेनान्वितार्थं च।

तथा हि—"ऋतं" इत्यादिवाक्यं यदि पूर्वपक्षरीत्या बुद्धिजीवविषयं स्यात्, तदा "ऋतं" इत्यादेरब्रह्मविषयतया "महान्तं विभुमात्मानं" इति प्रस्तुतब्रह्मप्रकरणविच्छेदात् "ऋतं" इत्यनेन अव्यवहितपूर्वं "यस्य" इत्यादिवाक्यमपि व्यवहितेन "महान्तम्" इत्यादिना एकप्रकरणतां त्यक्त्वा, "ऋतं" इत्यादिना एकप्रकरणतामापन्नं सत् "ऋतं" इत्यादिवत् कर्मफलभोक्तृत्वरूपात्तत्वप्रतिपादकतया जीवविषयं स्यात्। यदा तु "ऋतम्" इत्यादिकं सिद्धान्तरीत्या जीवब्रह्मविषयं, तदा तस्य ब्रह्मविषयतया ब्रह्मप्रकरणाविच्छेदात् "यस्य" इत्यादिकमपि संहर्तृत्वरूपात्तृत्वप्रतिपादकतया ब्रह्मविषयं स्यादिति पूर्वसूत्रद्वयार्थे प्रत्युत्तरसूत्रद्वयार्थस्य उपजीव्यत्वादित्याहुः।

तन्न, अस्मन्मते पूर्वसूत्रद्वयस्य बृहदारण्यकगतवाक्यविषयत्वेन, उत्तरद्वयस्य च काठकगतवाक्यविषयत्वेनैकप्रकरणस्थविषयत्वाभावात्। किञ्च "ऋतम्" इत्यादिकं "महान्तम्" इत्यस्य "यस्य" इत्यस्य च

इति निरस्तम् । सूत्रविरोधात् । प्राज्ञेनेत्यादिमानान्तराप्राप्तभेदोपदेशविरोधाच्च । नच "अत ऊर्ध्वं विमोक्षायैव ब्रूही"ति पृष्टे उक्तो भेदो भेदकधर्माश्च मिथ्येति युक्तम् । न वा मानान्तरेण स्वप्रकरणस्थेन प्राज्ञेनेत्यादिवाक्येन चाविरुद्धमहत्वादिविधिपरत्वसंभवे तद्विरुद्धाभेदपरत्वं युक्तम् । तस्मान्नेहैक्योक्तिः । यच्चेहोच्यते भेदादिकं तच्च न तत्वम् । पत्यादिसूत्रस्य पूर्वशेषत्वे च चशब्दापात इति ॥

केचित्तु ॥ सुषुप्त्यादीति सूत्रद्वयमस्मदुक्तवाक्यविषयमेव स्वीकृत्य मुक्तजीवाद्विलक्षणब्रह्मसाधनपरं सत् "आकाशोर्थान्तरे"त्येतदधिकरणशेष इत्याहुः । तन्न । "आकाशो वै नामे"त्यत्राकाशो मुक्तजीव एव न तु ब्रह्मेति वदता पूर्वपक्षिणा तस्मिन्नेवाधिकरणे तद्वाक्यविचारं विहाय स्वोक्तिविरुद्धस्य मुक्तजीवब्रह्मैक्यस्य तत्त्वमस्यादिवाक्यान्तरमाश्रित्य शङ्कितुमनुचितत्वात् ॥

टीकाक्षरार्थस्तु—स्वरव्यत्ययस्याधिकार्थत्वादिति ॥ "अधिक्येऽधिकमित्येव हरिणा सूत्रमीरित"मिति ऋग्भाष्य उक्तत्वात् ब्रह्मणा वेदेन गम्यत्वाधिक्यविवक्षया दीर्घ इत्यर्थः । इतरत् स्पष्टमिति ॥

॥ इति ब्राह्मणाधिकरणम् ॥ १४ ॥

इति श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना
विरचितायां श्रीमद्भाष्यटीकाया विवृतौ
तात्पर्यचन्द्रिकायां प्रथमाध्यायस्य तृतीयः पादः ॥



॥ श्री. ॥

श्रीमद्ब्रह्मण्यतीर्थपूज्यपादशिष्यश्रीमद्व्यासमुनिविरचिता

# तात्पर्यचन्द्रिका

## प्रथमाध्यायस्य चतुर्थः पादः

॥ श्री गुरुभ्यो नम हरि: ॐ ॥

श्रीमद्धनुमद्भीमसमध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

### अथ आनुमानिकाधिकरणम्

### ॥ ॐ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॐ ॥

अत्र अस्तु विष्णोः कारणत्वं न तु सर्वसमन्वयः । चतुर्थसूत्रे कथित इति शंका जिवार्यते । एवं तावत् त्रिपाद्यां जन्मादिसूत्रे कंठोक्तकारणत्वतत्संगतानंदमयत्वादिगुणांतरप्रतिपादकवाक्यस्थ शब्दसमन्वय उक्तः । अत्र तु पादे जिज्ञासासूत्रे ब्रह्मशब्दोक्तसर्वगुणपूर्तिमत्तया जिज्ञासोक्तेः जन्मादिसूत्रे च पूर्णगुणत्वोपपादककारणत्वमुखेन पूर्णगुणत्वस्यैव लक्षणत्वेन विवक्षितत्वात् शास्त्रयोनिसूत्रे च तत्स्फूर्तये सर्वशास्त्रप्रामाण्यप्रतिज्ञानात् समन्वयसूत्रे च तदर्थे समन्वयप्रतिज्ञानात् सर्वसमन्वयनिर्वाहायात्यत्रैव प्रसिद्धाव्यक्तादि शब्दसमन्वय उच्यत इति नाप्रतिज्ञातोक्तिः । यथा चैकैकहेतुत्वस्यलक्षणत्वसंभवेपि मुमुक्षुणा समुदितजन्मादिहेतुत्वं ज्ञेयमित्यादिज्ञापयितुं समुदितहेतुत्वोक्तिः । तथैकैकगुणपूर्तेस्तत्संभवेपि सर्वगुणपूर्त्युक्तिः । यदि च कारणत्वमेव लक्षणं तत्रैव च कारणे शास्त्रं प्रमाणं तत्प्रामाण्यं च कारणवाक्यसमन्वयादिति जन्मादिसूत्रत्रयेऽभिप्रेतं स्यात् तर्हि आद्यपादे "अतः ज्योति"रित्यादौ द्वितीये "सर्वत्र अतर" इत्यादौ तृतीये "भूमा दहर" इत्यादौ चतुर्थे "वाक्यान्वया"दित्यादावकारणवाक्यसमन्वयसूत्रणं न स्यात् । तच्च परैरपि स्वीकृतं । अत्रानुव्याख्याने—

विरोधिसर्वबाहुल्यकारणस्त्रीनिषेधिनाम् ।
पृथक् समन्वयार्थानि स्थानान्येतानि सर्वश ॥

इत्यापादसमाप्त्यधिकरणोपाधयो दर्शिताः । तद्व्याख्यातं सुधायां आद्येऽधिकरणे परमैश्वर्यविसेष्यवरत्वाद्यर्थानां द्वितीय उक्त वक्ष्यमाणातिरिक्तानां सर्वेषां तृतीये बहुत्वविशिष्टार्थानां चतुर्थेऽवांतरकारणार्थानां प्रकृतिश्चेत्यत्र स्त्रीलिङ्गानां एतेनेत्यत्र निषेधार्थानां शून्यादिशब्दानां समन्वय इति । तत्र यदा "समाकर्षा"दित्यादिसूत्राष्टकस्य "कारणत्वेने"ति चतुर्थाधिकरणशेषता तदैतत्पादीयाधिकरणानि षडित्युपाधिषट्कोक्तिर्युक्ता । यदा तु सूत्राष्टकस्य पृथगधिकरणता तदाऽधिकरणानि सप्त । तत्र "समाकर्षा"दिति पंचमाधिकरणोपाध्यनुक्तिस्तु पंचमस्यापि द्वितीयवत् सर्वविषयत्वेन तदुपाधितः पृथगुपाध्यभावात् । न्यायभेदमात्रेणत्वधिकरणभेदः । द्वितीयेपि योगवृत्त्या सर्वेषां पदवर्णादीनां समन्वय उक्तः । सुधायामुक्तवक्ष्यमाणातिरिक्तग्रहणं त्ववरत्वादिलिङ्गानां पंचजनादिशब्दानां येन वाक्यरूपेण पूर्वत्र चोत्तरत्र च विचार्यता तेन रूपेण द्वितीयेन विचार्यता । किन्तु पदादिरूपेणेत्यभिप्रेत्य । अन्यथोक्तवक्ष्यमाणातिरिक्तसर्वविषयत्वस्य सर्वाधिकरणसाधारण्याद्विशिष्टोक्तिर्न स्यात् । अनुव्याख्याने व्युत्पत्तेरशक्यत्वं च द्वितीये पूर्वपक्षहेतुत्वेन नोच्येत । जीत्याद्यवयवानामब्रह्मपरत्वेन ज्योतिरित्यादि समुदायस्य ब्रह्मणि व्युत्पत्तिसंभवात् ।

ननु "अव्यक्तात् पुरुषः परः जीवा एव तु दुःखिनः" इत्यवरत्वदुःखित्वादिदोषवाचिशब्दसमन्वयानुक्तावपि गुणपूर्तिः सेत्स्यति । नच समन्वयः स्वरूपेण फलम् । दुःखादिशब्दसमभिव्याहृतजीवादिशब्दप्रवृत्तिनिमित्तप्राणधारकत्वादि गुणास्तु "अनेन जीवेनात्मने"त्यादिवाक्यस्थ जीवादिशब्दसमन्वयेनापि सेत्स्यति । नच "आकाशाद्वायु"रित्यादि वाक्यसवन्वयेनेश्वरस्यावांतरकारणत्वमिव "महतः परमव्यक्तमव्यक्तात्पुरुषः पर" इत्यादि वाक्यसमन्वयेनावांतरपरत्वादि सेत्स्यतीति वाच्यम् । पितामहस्य पितृत्वाभाववत्तदुत्तमादुत्तमस्य तदुत्तमत्वाभावादर्शनेन महत्पराव्यक्तात्परस्य पुरुषस्य महत्परत्वाभावशंकानुदयात् । नच दुःख्यादिशब्दानां गुणप्रकाशकापूर्वयोगकल्पनया गुणसिद्धिः । दोषवाचितामुपेत्य तदधीनत्वेनैव सिद्धांतोक्तेः । सर्व-

नियामकत्वं चांतर्याम्यधिकरणादिभिरेव सिद्धम्। तस्मादव्यक्तदुःख्यादिशब्दसमन्वयो निष्फल इति चेत् मैवम्। ब्रह्मणो गुणांतरपूर्तिरिव सर्वशब्दवाच्यतापि मुमुक्षुणा ज्ञेया। अन्यथा "नामानी"त्यादि श्रुतौ तद्वाच्यतोक्तिः तथा "प्राणश्च इत्येव विद्या"दित्यादि श्रुतौ वाच्यत्वस्य ज्ञेयत्वोक्तिः तथा "नामायत्तासमतृप्यच्छ्रुतेधी"ति श्रुतौ तज्ज्ञानान्मोक्षोक्तिश्च न स्यात्। अन्यथा "नामानि सर्वाणि" इत्यादि श्रुतेः दुःख्यादिशब्दान्यविषयत्वेन संकोचे मूलप्रमाणाभावादिद्रादिशब्दानामपि समन्वयो न सिध्येत्। किन्तु ब्रह्मलिङ्गैरमुख्यवृत्त्या ब्रह्मपरत्वमात्रं स्यात्। किञ्चेश्वरस्य शक्रादिगतैश्वर्यादेः स्वाधीनत्वात् "इंद्रो राजा जगतो य ईश" इत्यादाविंद्रादिशब्दवाच्यतेव जीवगतबंधादेः स्वाधीनत्वात् "कार्यकारणबद्धौ ता"वित्यादि श्रुतिस्थबद्धादिशब्दवाच्यतापि ज्ञेया। अन्यथा "स बद्धः स दुःखी स बंधयति स दुःखयती"त्यादि श्रुतिषु तदुक्तिर्न स्यात्। किञ्च "महतः परमव्यक्त" मित्यत्राव्यक्तशब्दस्याब्रह्मपरत्वे "अनाद्यनंतं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यत" इत्युत्तरवाक्येपि तच्छब्देन प्रकृतस्याब्रह्मण एव परामर्शादब्रह्मज्ञानादपि मोक्षः स्यादिति सफलाऽव्यक्तादिशब्दसमन्वयोक्तिः। अत्राव्यक्तदुःखिबद्धावरादिशब्दमुख्यार्थः किं प्रधानजीवादिः किं वा विष्णुरिति चिता। तदर्थं "अव्यक्ता"दिति पंचम्या दुःखादि प्रातिपदिकानां च प्रवृत्तिनिमित्तं किं ब्रह्मणि न युक्तमुत युक्तमिति। तदर्थं किमवधित्वदुःखित्वादिकं प्रत्याश्रयत्वमेव पंचमीदुःख्यादिशब्दनिमित्तं किं वा तत्प्रति स्वातंत्र्यमपीति। तत्रापि किमाश्रयत्वं मुख्यनिमित्तमुत स्वातंत्र्यमेवेति।

पूर्वपक्षस्तु ॥ अव्यक्तजीवादिशब्दमुख्यार्थो न ब्रह्म। अव्यक्तादिशब्दानां प्रधानादौ प्रसिद्धेः। अव्यक्ते पंचम्युक्तेनपरत्वावधित्वेनार्थादाक्षिप्तस्यावरत्वस्य जीवे श्रुतस्य दुःखित्वादेश्च ब्रह्मणि सर्वप्रमाणविरुद्धत्वात्, पूर्वाधिकरणोक्तसर्वाधिपतित्वादि विरुद्धत्वाच्च। तदुक्तं न्यायविवरणे "सर्वमानविरोध इति।" "अक्षरात् परतः पर इत्यत्र तु न पंचम्यंतोक्षरशब्दो ब्रह्मणि। किन्तु "तदक्षरमधिगम्यत" इति प्रथमांतः।

नन्ववधित्वादिकं प्रत्याश्रयत्वमेव न पंचम्यादिनिमित्तम्। किन्तु

तत्प्रतिस्वातंत्र्यमपि। भृत्यगतजयस्य राजाधीनत्वमात्रेण राजा जयीति प्रयोगात्। तथा च ब्रह्मण्यवधित्वादिकं प्रति स्वातंत्र्यस्य सत्त्वादव-रादिशब्दो युक्तः। एतेन यत्रावरादिशब्दोस्ति तत्रास्तु तस्य स्वातं-त्र्याभिप्रायत्वम्। इह तु पंचम्युक्तपरत्वावधित्वेनाक्षिप्तमवरत्वं न तदभिप्रायम्। न हि शब्द इवानुपपत्तिरपि व्याख्यानार्हेति निरस्तम्।

परत्वावधित्वंप्रत्याश्रयत्वस्यैयार्थादवरत्वाक्षेपकत्वेन तत्प्रतिस्वातं-त्र्यस्य तदनाक्षेपकत्वादिति चेन्न। भृत्यदैर्घ्येण ह्रस्वेपि राज्ञि दीर्घ-शब्दस्य राजाधीनेन शत्रुगतदुःखेन राज्ञि दुःखिशब्दस्य राजाधीनभृत्य-गतबंधादिना राज्ञि बद्धादिशब्दस्य चापातात्। तेषाममंगलत्वाद्राज्ञि-प्रयोगो न चेद्ब्रह्मण्यपि स न स्यादिति॥

सिद्धान्तस्तु—स्वातंत्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम्।
स्वातंत्र्यं तत्र मुख्यं स्यात्कुतो राज्ञि जयोन्यथा॥

इत्यनुव्याख्यान उक्तः। अयं भावः। स्वातंत्र्यस्य निमित्तत्वेपि न राज्ञि-बद्धादिशब्दाः। यतः स्वातंत्र्यं नामनियामकत्वे सति तदाश्रयप्रयुक्त-नीचत्वायोग्यत्वमिह विवक्षितम्। एवं च भृत्यादिगतदुःखादिकं प्रति राज्ञो न स्वातंत्र्यम्। तदाश्रयत्वप्रयुक्तनीचत्वयोग्यत्वात्। किन्तु जयादिकं प्रत्येव। तदयोग्यत्वात्। ब्रह्मणस्तु तदयोग्यत्वादस्ति तत्प्रत्यपि स्वातंत्र्यम्। इंद्रादिशब्दनिमित्तैश्वर्यं प्रति तु ब्रह्मणो योग्यत्वेपि तस्य नीचत्वाप्रयोजकत्वादेवास्ति तत्प्रत्यपि स्वातंत्र्यम्। आश्रयत्वपक्षेपि हि नाश्रयत्वमात्रं निमित्तम्। रूपदंडाद्याधारे कालादौ रूपीत्याद्यप्रयोगात्। यद्वा स्वगतत्वयोग्यत्वे सति यद्दोषत्वं तद्रहितं प्रति स्वातंत्र्यं निमित्तम्। कार्यबलेन तथाकल्पनात्। एवंच जयादे-र्बंधनादेश्च राजगतत्वयोग्यत्वेपि जयादेर्दोषत्वराहित्यात्तत्प्रतिस्वातंत्र्यं निमित्तम्। बंधनादेस्तु दोषत्वान्नतत्प्रति स्वातंत्र्यं निमित्तम्। ब्रह्मणि त्विंद्रादिशब्दनिमित्तैश्वर्यादेः स्वगतत्वयोग्यत्वेपि दोषत्वराहित्यात् बंधनादेश्च दोषत्वेपि स्वगतत्वयोग्यत्वराहित्यादुभयं प्रति स्वातंत्र्यं निमित्तम्। अत एवानुव्याख्याने "राज्ञो बंधादियोग्यत" इति राज्ञो बंधादिदोषयोग्यता, "दोषात्यस्पृष्टिनियम" इति विष्णौ दोषायोग्यता चोक्ता। अथवा स्वातंत्र्यमात्रं निमित्तम्।

"सर्वांतर्यामिणि हरावस्मच्छब्दविभक्तयः।

युष्मच्छब्दगताश्चैव सर्वास्तच्छब्दगा अपि ।
सर्वशब्दगताश्चैव वचनान्यखिलान्यपि ।
स्वातंत्र्यात् संप्रवर्तत ”

इत्यादिश्रुतेः, “सर्वस्य तदधीनत्वात् सर्वशब्दाभिधेयते ”त्यादिस्मृतेश्च। न चैवं राज्ञि बद्धादिशब्दापातः। तद्गतत्वस्य निमित्तत्वेपि धनादिवाहके धनीत्यादि शब्दापातात्। अथ रूपीदंडीत्यादौ तद्गतत्वं निमित्तम्। धनीगृहीत्यादौ तु स्वातंत्र्यमिति चेत्तर्हि जयीत्यादौ स्वातंत्र्यमपि निमित्तम्। दुःखीत्यादौ तु लोके तद्गतत्वमेवेत्यस्तु॥

ननु धनीत्यादौ न धनं निमित्तम्। किंतु तत्स्वामित्वम्। तच्च धनिगतमेवेति चेत्तर्हि जयीत्यादावपि तत्स्वामित्वं निमित्तम्। तच्च राजगतमेव। दुःखीत्यादौ तु रूपीत्यादाविव लोक आश्रयत्वमेव निमित्तम्। ब्रह्मणि तु स्वातंत्र्यमित्यस्तु “स बद्धः स दुःखी स बंधयति स दुःखयती”त्यादि श्रुतेः। न चैकस्यैकत्रैकं निमित्तं चेदन्यत्रापि तथेति नियमः। एकस्यैव धनवतः शब्दस्य धनवद्गृहमित्यादावाश्रयत्वनिमित्तकत्वेपि धनवान् पुरुष इत्यादौ स्वामित्वनिमित्तकत्वात्।

किञ्च यथा मृत्तिकादौ द्रव्यत्वसामान्ये द्वेषादौ च गुणत्वसामान्ये सत्यपि सुवर्णादाविव ज्ञानादाविव च द्रव्यमिति गुण इति च न प्रयोगः यथा च धेनुशब्दनिमित्तस्य “धेट्इच्चे ”ति व्याकरणोक्तस्य धानकर्मत्वस्य महिष्यादौ सत्त्वेपि तत्र तदप्रयोगः, यथा च निमित्ते सत्यपि कुलाले कुंभकारशब्दस्येवोदंचनकारादिशब्दानामप्रयोगः, अभिधानादिलक्षणा हि कृत्तद्धितसमासाः। यथा पंकजादिशब्दानां यौगिकत्वपक्षे योगरूढत्वपक्षे च कुमुदादौ योगस्य सत्त्वेपि तत्र तदप्रयोगः, यथा च घटपटसंयोगस्यैकत्वे न घटेपि घटसंयोगस्य सत्त्वेपि घटे घटसंयुक्तशब्दाप्रयोगः, तथा राज्ञि सत्यपि निमित्ते बद्धादिशब्दाप्रयोगोस्तु। प्राज्ञानां मृत्तिकादौ द्रव्यादि शब्दप्रयोग उचित इति चेत्प्रकृतेपि समम्। उक्त श्रुतेः। “यदधीनो गुणो यस्य तद्गुणी सोभिधीयत ” इति स्मृतेश्च।

ननु यौगिकत्वपक्षे पंकजादिशब्दानां कुमुदादौ पूर्वपूर्वप्रयोगाभावादेवावयवशक्तिप्रतिबंधः कल्प्यते। यथोक्तं “अप्रयोगादेवाप्रयोग”

इति। योगरूढत्वपक्षे तु पद्मे रूढिः कुमुदादौ योगप्रतिबंधकेति चेदिहापि तर्हि राज्ञि बद्धादिशब्दानां पूर्वपूर्वप्रयोगाभावो वा बद्धत्वाश्रये रूढिर्वा प्रतिबंधिकास्तु। ब्रह्मणि तु श्रौतरूढिरस्तीत्युक्तम्। किंच व्याकरणे त्वामतिक्रांतानामित्याद्यर्थे अतित्वाकमतित्वयामित्यादयः, मामतिक्रांतानामित्याद्यर्थे अतिमाकमतिमयामित्यादयश्च लक्षणतो व्युत्पादिताः। नच तेषां प्रयोगोस्ति। तद्वदिहाप्यस्तु। अदर्शनेपि व्याकरणस्मृत्या व्युत्पादितत्वात्प्रयोगयोग्यतास्तीति चेत्तर्हीहाप्युक्तया श्रुत्या स्मृत्या च व्युत्पादितत्वाद्योग्यतास्तीति समम्। किंच यथा द्वंद्वस्योभयार्थत्वेपि प्राण्यंगादौ समाहारस्यैव विवक्षा दधिपयआदावितरेतरयोगस्यैव। तथा दुःखीत्यादेरुभयार्थत्वेपि लोकआश्रयत्वस्यैव विवक्षा। ब्रह्मणि तु स्वातंत्र्यस्येत्यस्तु। यद्वा राज्ञो बंधनादियोग्यत्वात्तत्र-अमंगलधीर्माभूदिति बद्धाद्यप्रयोगः। ब्रह्मणस्तु दोषातिदूरत्वात्प्राज्ञानां तद्धीर्नास्तीति स्वातंत्र्याविवक्षया तत् प्रयोगेप्यदोषः। न चोत्कर्षेण वर्तनस्यापि जयिधात्वर्थत्वात्तदाश्रयत्वस्य च राज्ञि संभवान्न स्वातंत्र्यं तत्र निमित्तमिति वाच्यम्। राजा शत्रून् जयतीत्यभिभवाभिप्रायेणापि तत्प्रयोगात्। नापि जयाश्रयभृत्यसंबंधाद्राज्ञि लाक्षणिकः भृत्यसंबंधिनि पुरुषांतरे तदप्रयोगात्। जयाश्रयभृत्यधीपूर्वकत्वाभावाच्च—

"न हि भृत्यस्य विजयिशब्दस्तावत्प्रयुज्यते।
यावद्राज्ञ्यन्यगत्वेपि स्वातंत्र्याभासमात्रत"॥

इत्यनुव्याख्याने भृत्यादपि राज्ञि प्रयोगप्राचुर्योक्तेश्च, धनीत्यादौ स्वातंत्र्येपि मुख्यत्वदर्शनाच्च "यदधीन" इति स्मृतावभिधोक्तेश्च। "तदस्यास्ति" इत्याद्यनुशासनस्याश्रयत्वस्वातंत्र्ययोः समत्वाच्च। न्यायविवरणे मृत्युनियामके मृत्युपदस्याभिधनादि सिद्धत्वेन मुख्यत्वस्योपपादितत्वाच्च। एवं च—

दुःखादेर्जीवगस्यापि स्वाधीनत्वेन हेतुना।
दुःखीति गीयते ब्रह्म धनस्वामी धनी यथा॥

स्वातंत्र्याश्रयत्वयोः संबंधयोर्भेदेपि निमित्तस्य दुःखबंधावरत्वादेरेकत्वात्तदाश्रितेपि तदधीनत्वस्यानुगतत्वाच्च न नानार्थता। अत एवानुव्याख्याने स्वातंत्र्ये मुख्यत्वोक्तिर्युक्ता। नहि नानार्थेष्वक्षादिशब्देष्वेकत्रार्थे मुख्यता। एवंच रूढस्य वा यौगिकस्य वा यस्य शब्दस्य प्रवृत्ति-

निमित्तमाश्रितत्वेन वा यथेष्टविनियोक्तृत्वरूपस्वातंत्र्यविषयत्वेन वा यदधीनं स तस्य वाचकः। तत्राप्याश्रयादपि स्वतंत्रं प्रत्यधीनत्वस्य मुख्यत्वात्तद्वाचिता मुख्या। एवंच दुःख्यादिशब्दानां स्वातंत्र्याद्देवेशे वृत्तिः। अव्यक्तादिशब्दानां त्वाश्रयत्वादपि। तन्निमित्ताव्यक्तत्वस्य परमसूक्ष्मे ब्रह्मण्येव मुख्यत्वात्। न च निमित्ताधिक्यान्न मुख्यत्वम्। अतिसहनवति पुंसि सिंहशब्दस्यात्पपंकजादप्यधिकं पंकजे पद्मे पंकज-शब्दस्य मुख्यत्वप्रसंगादिति वाच्यम्। तत्र सिंहत्वजातेः पद्मत्वजातेश्च निमित्तत्वेन विवक्षितत्वात्। तयोश्च तत्रातिशयाभावात्। अल्पज्ञादपि बहुज्ञे विद्वच्छब्दस्य मंडलाधिपादपि सार्वभौमे भूपशब्दस्य मुख्यत्व-दर्शनाच्च। "इति शंका निरस्ताभवती"ति टीकायां त्वव्यक्तत्वं न केवलमीशेधिकं किंतु प्रधानगतमपि तदधीनमिति परिहारांतरस्य भाष्यस्थ चशब्दादिसूचितस्य सद्भावादयं परिहारो नोक्तः। शब्दस्य मुख्यत्वे च निमित्तमुख्यत्वं हेतुः। नतु प्रयोगप्राचुर्यं। रूढलक्षणादौ तत्प्राचुर्येपि मुख्यत्वादर्शनात्। नूतनयौगिकशब्देषु तत्प्राचुर्याभावेपि मुख्यत्वदर्शनाच्च। किंच —

> प्रयोगो ज्ञापकः शक्तेर्निमित्तं तु नियामकम्।
> नियामकानुसारित्वं नियम्यस्य च शोभते ॥

प्रयोगो हि शक्तेर्ज्ञापक एव। निमित्तं तु शक्तिविषयतावच्छेदकतया तन्निया-मकम्। नियम्यं च नियामकानुसारि। न च प्रयोग एव ज्ञापकः। उपदेशादिनापि तज्ज्ञानात्। सुलभा च "प्रातिपदिकाद्धात्वर्थे" इति ण्यन्तेभ्योऽवरादिशब्देभ्यः पचाद्यचिकृते अवरयतीत्यवर इत्यवरादिशब्दानां ब्रह्मणि व्युत्पत्तिः। तदुक्तं न्यायविवरणे "प्रसिद्धत्वाच्च कर्तृव्युत्पत्ते"रिति। सर्वं चैतत् "नामानि सर्वाणि यमाविशन्ति वचसां वाच्यमुत्तम"मित्यादि श्रुतिस्मृतिबलात् कल्प्यते। आविशन्तीत्यादिना मुख्यवृत्त्युक्तेः। दृष्टाहि चमसस्वर्गादिशब्दानां शिरः सुखादौ लोकप्रयोगाभावेपि "इदं तच्छिर एष ह्यर्वाग्बिलश्चमसः सुखं स्वर्गपदास्पद"मित्यादि श्रौतानुशासनाच्छिरः सुखादिवाचिता। इमौ च पूर्वोत्तरपक्षौ तदधीनत्वरूपमूलहेत्वाश्रितौ। ज्ञेयत्वावचनादिहेत्वन्तराश्रितौ तु भाष्यादौ स्पष्टौ। ज्योतिर्दर्शना"दित्यत्र टीकायां म्रियमाणादिशब्दोन्तर्णीतणिजित्येवोक्तम्। नतु स्वातन्त्र्यं मुख्य-निमित्तमिति। अभिमान्यधिकरणेपि "मृदब्रवी"दित्यादौमृदादिशब्दा देवता-

परा इत्येव सिद्धान्तः। देवतायां मुख्यत्वं त्वत्रत्यतदधीनत्वन्यायाधीनमिति न पुनरुक्तिः॥

सूत्रक्रमस्तु॥ आद्ये सूत्रे ब्रह्मणोऽव्यक्तादौ विन्यस्तत्वेनाव्यक्तादेरपि ब्रह्मसम्बन्धत्वाद्वाच्यतेति दर्शयितुं विन्यस्तपदम्। न च वाच्यं प्रधानादिसम्बन्धाद्ब्रह्मणो वाच्यतास्त्विति। तस्य ब्रह्मशरीरतुल्यत्वेन तत्तन्त्रत्वादिति दर्शयितुं शरीररूपपदम्। शरीरस्य रूपमिव रूपं यस्येति विग्रहः। कप्रत्ययेन मुख्यतो नेश्वरशरीरम्। जडत्वादिना कुत्सितत्वादित्युक्तम्। दर्शयति च शब्दाभ्यां तु ब्रह्मग्रहणे हेतुत्वेन भाष्योक्तश्रौतस्मार्तप्रयोगोक्तिः। द्वितीये प्रयोगमात्रान्न मुख्यतेति शङ्कानिरासाय ब्रह्मण्यव्यक्तादि प्रातिपदिकनिमित्तोक्तिः। तृतीये पञ्चमीविभक्त्यादिनिमित्तोक्तिः। चतुर्थे भावरूपान्तरङ्गनिमित्तरूपहेतूक्त्यनन्तरमभावरूपबहिरङ्ग - ज्ञेयत्वावचनरूपहेतूक्तिः। अस्य च सूत्रस्य "तमेवैकं जानथे"ति ब्रह्मण एव मुमुक्षुज्ञेयत्ववचनादन्यस्य च तदभाववचनान्मोक्षफलकानां वेदानां ब्रह्मपरत्वसिद्धेः। प्रतिवाक्यं च तत्परत्वस्य "आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयत" इत्यादिवचनसिद्धत्वात् स्वतः प्राप्तमुख्यवृत्तित्यागे च हेत्वभावाद्ब्रह्मैवाव्यक्तादिशब्दमुख्यार्थ इत्यर्थः। पञ्चमे चतुर्थोक्तज्ञेयत्वावचनमसिद्धम्। "निचाय्य तं मृत्युमुखात् प्रमुच्यत" इत्यत्र महत्परत्वेन लिङ्गेन प्रधानस्योक्तेरिति शङ्कायां लिङ्गस्यान्यथासिद्ध्युक्तिः। षष्ठे निचाय्यवाक्ये प्रधानोक्तौ बाधकोक्तिः। सप्तमेऽस्यामुपनिषद्येव मुमुक्षुज्ञेयत्वेन प्रधानोक्तौ बाधकोक्तिः। तत्र च त्रयाणां मध्ये प्रधानमेकमस्त्विवति शङ्कां निरसितुं पितृसौमनस्याग्निब्रह्मरूपश्रुत्युक्तप्रकारोक्त्यर्थं सूत्रएवंशब्दः। प्रश्नस्य प्राथम्येपि प्रतिवचनस्थनिचाय्यवाक्यस्य प्रधानपरतायाः शंकितत्वात्तन्निरासाय प्रतिवचनस्यादौ निर्देशः।

ननु प्रश्नप्रतिवचनयोस्त्रयविषयत्वेपि यथा "महतःपरमव्यक्त"मिति वाक्यममुख्यवृत्त्या प्रधानपरं तथा निचाय्यवाक्यमप्यस्तु। तावतैव प्रधानस्य महतः परत्ववन्मोक्षार्थं ज्ञेयत्वं च सेत्स्यतीति चेन्न। अव्यक्तमिति वाक्यस्य प्रधानपरत्वेपि ब्रह्मणि पर्यवसानवन्निचाय्यवाक्यस्य तदभावात्। तत्प्रश्नोत्तरेपि हि तदर्थमन्योक्तिर्युक्ता नतु स्वातंत्र्येण एवं चतुर्थोक्तस्वपक्षसाधके त्रिभिः स्थापितेऽष्टमे प्रयोगप्राचुर्याभावरूपस्वपक्षबाधकोद्धाराय तत् प्राचुर्याभावेपि प्रवृत्तिनिमित्तातिशयेन मुख्यत्वे मह-

च्छब्दहृष्टांतोक्तिः। नवमे महच्छब्दस्य विष्णौ मुख्यत्वमद्याप्यसिद्धिमिति-मन्वानं प्रत्यनुशासनरूपश्रुतिसद्भावेन मुख्यत्वे चमसशब्दष्टष्टांतोक्तिरिति। यत्तूक्तमुभाभ्यां ईक्षत्यधिकरणोक्तं प्रधानस्याशब्दत्वमयुक्तम्। महतः-परमव्यक्तमिति वाक्ये प्रधानोक्तेरिति प्राप्ते तन्निरासेनेद सिद्धांत इति। तत्र न तावत्प्रधानस्य शाब्दत्वमात्रमिह निरस्यम्। त्वन्मते समन्वयसूत्रे सर्वसमन्वयस्याप्रतिज्ञातत्वेन प्रधानस्याव्यक्तादिश(ब्दमुख्यार्थ)ब्दार्थत्वे प्यविरोधेन तन्मात्रनिरसनस्य निष्फलत्वात्। प्रधानादितत्वानां श्रुत्यादि-सिद्धताया वक्ष्यमाणत्वेनाशक्यत्वाच्च। ईक्षतिसूत्रेपि निष्फलत्वाशक्य-त्वाभ्यां शाब्दत्वमात्राभावोक्त्ययोगाच्च। नापि कारणत्वेन शाब्दत्वं निरस्यम्। इह कारणत्वाभावात्। नच "महतःपर"मिति परशब्देन तद्भानम्। "अव्यक्तात्पुरुषःपर" इत्यादाविव तेन तत उत्तमत्वस्यैव-प्रतीतेः। तस्मान्न पूर्वपक्षोदयः। किञ्च अव्यक्तशब्दार्थः किं ब्रह्मेति सिद्धांत्यते किं वा विद्यादिकमिति। नाद्यः। अनंगीकृतेः। नांत्यः। ब्रह्मणि समन्वयानुक्त्याध्यायासंगतेः। प्रधाने ब्रह्मलक्षणस्यातिव्याप्ति-परिहारोप्यविद्यादौ तदपरिहाराच्च।

कारणत्वं प्रधानस्य निरस्य स्थापितं यदि।
अविद्यादेस्तदा कोनु लाभोस्ति ब्रह्मवादिनः॥
वृकेणापहृतं मेषमादायातिप्रयत्नतः।
स चेद्व्याघ्राय दीयेत को लाभस्तेन सिध्यति॥

ननु परशब्दस्योत्कर्षार्थत्वादिह कारणत्वधीरेव नेति सिद्धांत्यते। एवं चाविद्यादेरव्यक्तशब्दार्थत्वेपि न दोष इति चेत्तर्हि प्रधानस्य तदर्थ-त्वेपि न दोष इति न तन्निरासः फलम्। अन्यथा "इंद्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मन" इत्यादावर्थादिशब्दानां सांख्यभिमतेश्वरानधीन-शब्दस्पर्शाद्यर्थत्वं, "आकाशाद्वायु"रित्यादावाकाशादिशब्दानां च तदभि-मतेश्वरानधीनाकाशाद्यर्थत्वं च निरस्यं स्यात्। जगदुपादानस्य गुण-त्रयात्मकस्यानादिभावस्याव्यक्तशब्दार्थस्व "मायां तु प्रकृतिं विद्यात् देवात्मशक्तिं स्वगुणैर्निगूढां गौरनाद्यंतवती यस्याव्यक्तं शरीर"मित्यादि श्रुतिभिः, "सत्वं रजस्तम इति गुणाः प्रकृतिसंभवाः यत्तत्रिगुणमव्यक्त" मित्यादि स्मृतिभिश्च त्वयापि स्वीकृतत्वात्। नाममात्रे च विवादा-योगात्। ईशानधीनत्वासत्यत्वादेश्चाकाशादेरप्यभावात्। यच्चोक्तं पूर्ववाक्ये

रथरूपकविन्यस्तशरीरस्यैवेहाव्यक्तशब्देन गृहीतिः।

तथाहि। शरीरादीनां रथादिरूपक्लृप्तिं दर्शयति शरीरं रथमेवेत्यादिपूर्ववाक्यमिति प्रथमसूत्रस्थपरिहारभागस्यार्थ इति। तन्न। शरीरगृहीतेरित्येतावतैव पूर्णत्वेन रूपकविन्यस्तपदवैयर्थ्यात्। रूपकविन्यस्तपदस्य शरीरविशेषणत्वेन पूर्वनिपातप्रसंगाच्च। रूपकविन्यस्तपदेनैव शरीरस्य रथरूपविन्यासस्योक्तत्वेन तथा हि दर्शयतीत्यस्य वैयर्थ्याच्च। यच्चोक्तं शरीरस्य स्थूलत्वादव्यक्तशब्दार्थत्वं न युक्तमिति न शंक्यम्। शरीरकारणस्यानभिव्यक्तनामरूपस्य प्रागवस्थारूपस्य बीजस्य सूक्ष्मत्वेनाव्यक्तशब्दार्हतया शरीरस्याप्यमुख्यवृत्त्याऽव्यक्तशब्दार्थत्वादिति द्वितीयार्थ इति तन्न। यस्य कारणस्य सूक्ष्मत्वं तस्यैव मुख्याव्यक्तस्य महतः परमित्यत्र ग्रहणे संभवति "शरीरं रथमेव चे"ति पूर्वत्र प्रकृतत्वेपि महत्परत्वरहितस्यामुख्याव्यक्तस्य शरीरस्य ग्रहणायोगात्।

ननु तर्हि भाष्यानुरोधादविद्यैवाव्यक्तशब्दस्यार्थ इति चेन्न। सौत्रशरीरशब्दविरोधात्। प्रकृतशरीरत्यागेनाप्रकृताविद्यापरत्वे सांख्याभिमतप्रधानपरत्वानिवारणाच्च। किंचाविद्यायाः सदा साक्षिसिद्धत्वेन व्यक्तत्वान्नाव्यक्तत्वम्। नवा तत्प्रयोजकं सूक्ष्मत्वम्।

यच्चोक्तं यदि बीजात्मकं प्रागवस्थारूपमव्याकृतमव्यक्तशब्दार्थ स्वीकृतं तर्हि सांख्यमतापत्तिः। जगतः प्रागवस्थाया एव सांख्यैः प्रधानत्वाभ्युपगमादिति न शंक्यम्। अस्माभिः स्वीकृतायाः प्रागवस्थायाः परमेश्वराधीनत्वेन स्वतंत्रप्रधानवादिसांख्यमतानापत्तेः। अर्थवच्च तद्बीजात्मकम्। तेन विनेश्वरस्य स्रष्टृत्वासिद्धेरिति तृतीयार्थ इति तन्न। त्वन्मते पूर्वस्मिन् सूत्रद्वय ईश्वरस्याप्रकृतत्वेन तच्छब्दस्याप्रकृतपरत्वापातात्। तदधीनत्वादितिहेतोः श्रुतार्थवत्त्वरूपसाध्यत्यागेन सांख्यमतापत्तिर्नेत्यध्याहृतसाध्यान्वयायोगाच्च। "यस्याव्यक्तं शरीर"मित्यादिश्रुत्या प्रधानस्वातंत्र्यस्यैव निराकर्तव्यतया तस्याव्यक्तशब्दार्थत्वनिरासायोगाच्च।

यच्चोक्तं गुणपुरुषांतरज्ञानान्मोक्ष इति वदद्भिः सांख्यैः प्रधानस्य ज्ञेयत्वाभ्युपगमादिह चाव्यक्तस्य ज्ञेयत्वावचनान्नेदमव्यक्तं प्रधानमिति चतुर्थोर्थ इति तन्न। ज्ञेयमित्यनुक्तावपि "महतःपरमव्यक्तम्" इति ज्ञापनेनैव ज्ञेयत्वसिद्धेः। "अव्यक्तात्पुरुषः पर" इति प्रकृतिपुरुषयोरंतरस्य ज्ञापनाच्च। अनृतविविक्तत्वेन ब्रह्मज्ञानार्थं त्वयाप्यविद्याया

ज्ञेयत्वाभ्युपगमाच्च । त्वदभिप्रेताविद्यास्वभावस्यानिर्वाच्यत्वादेरपीह अवचनाच्च। यच्चोक्तं "निचाय्य तं मृत्युमुखात्प्रमुच्यत" इति प्रधानस्य ज्ञेयत्वं वदतीति चेन्न। प्राज्ञो हि परमात्मा तत्र ज्ञेयत्वेन निर्दिष्टः। प्रकरणादिति पंचमार्थ इति तन्न। त्वन्मते ज्ञातृत्वादिरहितशुद्धतुरीयज्ञानस्यैव मोचकत्वेन सूत्रे प्रज्ञावद्वाचकप्राज्ञपदायोगात् । "प्रज्ञाश्रद्धार्चाभ्योण" इति हि व्याकरणसूत्रम्। श्रुतिरपि परस्य प्रतिकूलैव। महतःपरत्वादिविशिष्टज्ञानस्यैव मोचकत्वोक्तेः।

यच्चोक्तं त्रयाणामेवाग्निजीवेश्वराणामेवेह प्रकरणे "सत्वमग्नि" मिति "येयं प्रेत" इति "अन्यत्रधर्मा"दिति प्रश्नादुपन्यासाच्च प्रधानं नाव्यक्तशब्दार्थ इति त्रयाणामित्यादि सूत्रार्थ इति तन्न। त्रयाणामेव प्रश्नेपि "इंद्रियेभ्यः पराह्यर्था" इत्यादौ त्रयातिरिक्तस्येन्द्रियादेरिव प्रधानास्याप्युक्तिसंभवात्। अनन्यार्थतयोक्तिस्तु प्रधानेपि न। अव्यक्तात्पुरुषः पर" इति पुरुषोक्त्यर्थमेव तदुक्तेः। अन्यथाऽविद्याया अपि त्रितयातिरिक्तत्वादव्यक्तशब्देनोक्तिर्न स्यात। किंच श्रुतौ "त्रीन् वरान् वृणीष्वे"ति "प्रथमं वरं वृण" इति "द्वितीयेनवृणेवरेणे"ति "वराणामेष वृतस्तृतीय" इति च त्रिशब्देन प्रथमादिशब्दैश्चोक्तपितृसोमनस्याग्नीश्वराणां त्यागेन सौत्रस्य त्रिशब्दस्यान्यपरत्वमयुक्तम्। किंच "येयं प्रेते विचिकित्से"तिप्रश्नस्य देहातिरिक्तजीवविषयत्वमयुक्तम्। न हि मृत्वा यमलोकं गत्वा यमात् पितृसौमनस्यरूपप्रथमवरग्रहणकाल एव "उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके" इत्यादि श्रुतवतः, तथा "सत्वमग्निं स्वर्गमध्येषि मृत्यो-प्रब्रूहित"मिति द्वितीयं वरं याचितवतः, तथा "स्वर्ग्यमग्निं नचिकेतः प्रजानन् त्रिकर्मकृत्तरति जन्यमृत्यू" इत्यादिकं च श्रुतवतः तथा- "इमारामाः सरथाः सतूर्या" इत्यादिना मृत्युना तैस्तैर्वस्तुभिर्विप्रलोभ्यमानस्यापि तत्त्यागेन "नान्यं तस्मान्नचिकेता वृणीत इत्यादि वदतो नचिकेतसस्तृतीयवरग्रहणकाले देहातिरिक्तात्मनि संदेहोस्ति। तस्मात् "येयं प्रेत" इति प्रश्नो मुक्तनियामकभगवद्विषयः। विस्तृतं चैतत्काठकभाष्ये। केचित्तु—

अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्।
अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वद॥

इति प्रश्नश्लोके धर्मशब्दस्य प्रसिद्धोपायपरत्वादधर्मशब्दस्य च प्रसिद्धोपेयपरत्वादस्मादित्यस्य च बुद्धिस्थोपेतृपरत्वादन्यत्र शब्देन च वैलक्षण्योक्तेः प्रसिद्धोपायोपेयोपेतृविलक्षणानामप्रसिद्धोपायादीनां त्रयाणां पृष्टत्वात्, यमेवैषवृणुते तेन लभ्य" इति च भक्तिरूपस्योपायस्य "अणोरणीया" नित्यादिनोपेयस्य विष्णोः "न जायते म्रियते वा विपश्चि"दित्यादिनोपेतुर्जीवस्योपन्यासात् सौत्रं त्रयाणामितिपदमुपायादित्रयपरमित्याहुः। तन्न। उक्तदोषत्वात् "प्रब्रूहि तं श्रद्धानाय मह्य"मित्यादावग्न्यादिविषयेषु प्रश्नेषु "प्रतेब्रवीमि तदुमेनिबोध-स्वर्ग्यमग्निं नचिकेत" इत्यादि प्रतिवचनेषु च स्फुटेषु तत्त्यागेनैकत्रैव श्लोके क्लेशेन त्रयाणां प्रश्नादिकं संपाद्य सौत्रस्य त्रयाणामित्यस्य तत्परत्वोक्तययोगाच्च। त्वदुक्तोपायादिविलक्षणाग्निप्रश्नादेरपि सत्त्वेन त्रयाणामेवेत्यवधारणायोगाच्च। यच्चोक्तमुभाभ्यां यथा "वेदाहमेतं पुरुषं महांत"मित्यादौ महच्छब्दो न तांत्रिकमहत्त्ववाची एवमव्यक्तशब्दोपि न तांत्रिकप्रधानवाचीति "महद्वच्चे"ति सूत्रार्थ इति तन्न। तद्वदिहप्रधानवाचित्वे बाधकाभावात्।

ननु महच्छब्द आत्मशब्दसामानाधिकरण्यादात्मपरः। आत्मनश्च परत्वं प्रधानेनयुक्तमिति चेन्न। त्वदभिप्रेताविद्यायामप्यात्मनः परत्वायोगात्। "अव्यक्तात् पुरुषः पर" इति पुरुषादव्यक्तस्यावरत्वप्रतीतेश्च, अत्मशब्दस्य स्वरूपार्थत्वादिनाप्युपपत्तेर्महच्छब्दस्यात्मार्थत्वाभावाच्चेति ॥

टीकाक्षरार्थस्तु ॥ न च मंचादावुक्तव्यभिचार इति ॥ पारतंत्र्यादमुख्यत्वमिति व्यभिचरितम्। मंचातंत्रेपि पुरुषे मंचशब्दस्यामुख्यार्थत्वदर्शनादिति न शंकयम्। मुख्यवृत्तावेव हीनत्वे प्रवृत्तिनिमित्तपारतंत्र्यं हेतुरित्येवाभिप्रेतत्वेन पारतंत्र्याभावेपि मंचादिशब्दे लक्षणासंभवादित्यर्थः॥ अलपत्वमिति ॥ पारतंत्र्यमित्यर्थः॥ इत्युक्तार्थविस्मरणविजृंभितमिति ॥ इति चोद्यमुक्तविस्मरणविजृंभितम्। निचाय्यवाक्यात्पूर्वस्मिन् "महतः पर"मिति वाक्ये ब्रह्मैवोच्यतइत्यानुमानिकसूत्र एवोक्तत्वादित्यर्थः॥ दक्षिणान्नंवनुते यो न आत्मेतिवदिति अस्मिन् वाक्ये य इत्यस्यान्नपरत्वेपि विधेयात्मविवक्षयापुल्लिंगत्ववदिहाप्येष इत्यस्य शिरःपरत्वेपि चमसविवक्षया पुल्लिंगत्वमित्यर्थः॥

॥ इति आनमानिकाधिकरणम ॥ १ ॥

## अथ ज्योतिरुपक्रमाधिकरणम्

# ॥ ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ ॥

पूर्वत्र सिद्धरूपदेवतातत्क्रमवाचिनामिंद्रियेभ्य इत्यादीनां समन्वय उक्तः। अत्र तु साध्यरूपकर्मतत्क्रमवाचिनां स उच्यत इति वा पूर्वत्राव-रादिशब्दनिमित्तानां ब्रह्मण्यसत्त्वेपि तदधीनत्वात्तत्रतेमुख्या इत्युक्तम्। अत्र तु योगवृत्त्यानिमित्तमपि ब्रह्मण्यस्तीत्युच्यत इति वाऽवांतरसंगतिः। अत्र ज्योतिरादिशब्दानां ब्रह्मणि समन्वयो न युक्त उत युक्त इति चिंता। तदर्थं सर्वशब्दानां योगः किं ब्रह्मणि न युक्त उत युक्त इति। तदर्थ-मवयवानां ब्रह्मणि यौगिकत्वे समुदायस्य ब्रह्मपरता न युक्तोत युक्तेति।

पूर्वपक्षस्तु॥ सर्वगुणपूर्तये सर्वशब्दानां ब्रह्मणि समन्वय इति यदुक्तं समन्वयसूत्रे तन्न। "वसंते वसंते ज्योतिषा यजेत"इति वाक्य-स्थानां ज्योतिरादिशब्दानां ज्योतिष्टोमादिकर्मस्वेव प्रसिद्धेः। प्रसिद्धि-त्यागेन ब्रह्मपरत्वे चान्यस्य कर्म तदंगतत्क्रमदेशकालधिकार्यादिप्रापकस्या-भावेन नियतकर्मानुष्ठानं न सिद्ध्येत्। नच शरीररूपकविन्यस्तगृहीते" रिति न्यायेनाव्यक्तादिशब्दानां ब्रह्मसंबंधात् प्रधानादाविव ज्योतिरादि-शब्दानामपि कर्मादौ वृत्तेः कर्मसिद्धिरिति वाच्यम्। एवं हि ब्रह्मणो-न्यत्रशब्दानां लक्षणैव स्यात्। तच्चाऽनिष्टम्। नापि तदधीनत्वन्यायेन ब्रह्मणि वृत्तिः। सर्वशब्दसमन्वयेपि सर्वनियंतृत्वादन्यस्य गुणस्यासिद्धेः।

"विध्यादीनां नियंतायं पूज्यः प्राप्यश्च तद्वताम्।
इत्यादिश्रुतिरूपेण विध्यादिश्रुतयोपि च॥"

"हरिं वदंति सर्वेषां तन्नामत्वादयापि वा"इत्यादि स्मृत्यनुसारेण सिद्धांतिना तदधीनत्वे सत्येवेह्ययोगस्यैव व्युत्पादयितव्यत्वाच्च। नापि "जातमोतं हरौ यस्माज्ज्योतिषः प्राणरूपत"। इत्यनुव्याख्यानोक्तरीत्या योगवृत्त्या ब्रह्मणि पदसमन्वयः। कर्मणि रूढेर्बलवत्त्वात्। किंच ज्योतिरित्यादि-शब्दावयवानां जि ओतिः इत्यादीनामपि ब्रह्मपरत्वे समुदायस्य ब्रह्मणि वृत्तिर्न स्यात्। नहि पंकः पंकजशब्दार्थः। जगज्जनकत्वादिगुणश्च न सिध्येत्। अवयवसमुदाययोर्द्वयोरपि भगवन्नाममात्रत्वात्। अवयवा-नामन्यत्रप्रसिद्धत्वेनाब्रह्मपरत्वे तु सर्वसमन्वयासिद्धिः। समुदायस्यापि तत एवाब्रह्मपरत्वापातश्च। अमुख्यवृत्त्याऽन्यपरतेति तु निरस्तम्। तदुक्तं

अनुव्याख्याने "व्युत्पत्तेरप्यशक्यते"तीति ॥

सिद्धान्तस्तु ॥ ज्योतिरादिशब्दमुख्यार्थो ब्रह्मैव। "तं यच्छतं वर्षाण्यभ्यार्चत्तस्माच्छतर्चिनस्तस्माच्छतर्चिन इत्याचक्षत एतमेव संतं स इदं सर्वं मध्यतो दधे यदिदं किंच तस्मान्माध्यमास्तस्मान्माध्यमा इत्याचक्षत एतमेव संत"मित्यादिना "तावा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्या"दित्यंतेन शतर्चिनः शतर्चिन इत्याद्यभ्याससहितेन वाक्येन ब्रह्मणः सर्वशब्दमुख्यार्थत्वोक्तेः। "अवस्वरातिगर्गरोगोधापरिसनिष्ववत्। पिंगापरिर्चनिष्कददिंद्रायब्रह्मोद्यत"मिति श्रुतौ गर्गरगोधादिशब्दानामपि परमेश्वरवाचितामुक्त्वा ब्रह्मशब्दार्थस्य वेदस्य विशिष्यतद्वारचितोक्तेश्च। "णकारोबलंषकारःप्राणआत्मेति विष्णुशब्दांतर्गतणकारषकारयोरर्थमुक्त्वा। "सयोहैतौणकारषकारावनुसंहितमृचोवेदे"ति श्रुतौ णकारषकारार्थः सर्वत्र पूर्वोत्तरवर्णसंहितार्थ इत्युक्तत्वाच्च। "अःइतिब्रह्मे"ति ब्रह्मवाचितयोक्तेनाकारेण सह सर्वशब्दानां समानार्थत्वस्य "अकारोवैसर्वावा"गिति श्रुत्योक्तेश्च। सृजतोहि श्रुतयोनुवर्तते नैवासृजतः किंवा विदधते किंवा निषेधंति स्तुतिमात्राएवतेस्यु"रिति श्रुतौ विध्यादिभागस्यापि भगवत्स्तुतित्वोक्तेश्च। "यद्वै किंचैतदध्यगीष्टानामैवैतन्नामवा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ" इत्यादौ "नामैवैत"दित्यंते छांदोग्ये "यद्वाचओमिति यच्च नेति यच्चास्याः क्रूरं यदुचोल्बणिष्णुतद्वियूयकवयोऽन्वविंदन्नामायत्तासमतृप्यन्छृतेधी"त्यैतरेये च सर्ववैदिकशब्दानां भगवन्नामत्वोक्तेश्च। "कश्छंदसांयोगमावेदधीर" इति श्रुतौ "इत्यस्याहृदयंसाक्षान्नान्योमद्वेदकश्चने"ति स्मृतौ च वैदिकयौगिकार्थस्य दुर्ज्ञानत्वोक्तेश्च।

"तत्रापि यौगिकोमुख्यस्सर्वत्रास्ति सवैदिके।
अनवस्थानि वृत्त्यर्थं यौगिके रूढिकल्पना।
तत्रापि परमो मुख्यो वाच्योशेषरवैर्हरिः।
तत्तन्मुख्याविरोधेन तदन्यार्थस्य संग्रहः" ॥

इत्यादिस्मृतेश्च नच "तं यच्छत"मित्यादिवाक्यस्यापि ब्रह्मणि पदसमन्वयाज्ञानेन सर्वशब्दवाच्यत्वसिद्धिरिति शंक्यम्। अस्य लोकप्रसिद्धपदार्थसंसर्गाबोधकत्वे तद्बोधाधीनस्य पदसमन्वयस्यैवासिद्धिः। बोधकत्वे तु पदसमन्वयो न स्वोपजीव्यं ब्रह्मणः सर्वशब्दवाच्यत्वरूप-

संसर्गं बाधते । "स्वाध्यायोध्येतव्य" इति वाक्यवच्चास्य विनियोक्तृत्व-विनियोज्यत्वेन विरुद्धे । अत्र च श्रुतावेतमित्यनेन "प्राणस्तथे"त्यत्र ब्रह्मत्वेन निर्णीतं "प्राणोह्येषयएषतपती"ति पूर्ववाक्यस्थं प्राणं परामृश्य अवयवार्थोक्त्यायोगः, "आचक्षत" इत्यनेन रूढिश्चोक्ता । अवधारणेन च लौकिकरूढिप्राबल्यप्रसक्तमन्येषां मुख्यार्थत्वं निरस्तम् । तदुक्तमनु-व्याख्याने "आचक्षत इति ह्यत्र संतमित्यवधारणात् ।

योगस्य रूढेः प्राबल्यं विद्वद्रूढिं च तत्रगाम् ।
बहुशो दर्शयत्यंजस्तात्पर्यात्सनिरुक्तिकम् " ॥ इति ।

न चैवं कर्मानुष्ठानस्य व्युत्पत्तेर्वानुपपत्तिः । यतः—

उपजीव्यं प्रसिद्धार्थं शतमित्यादिका श्रुतिः ।
न शक्ता बाधितुं तस्माद्युक्तेव्युत्पत्तिकर्मणी ॥

नहि ज्योतिरादिशब्दानां तदवयवानां च प्रसिद्धोर्थो विनैव बाधकं त्यक्तुं युक्तः । नच "तं यच्छतंवर्षाणी"त्यादिश्रुतिरेव बाधिका-अनया ब्रह्मणि शतचर्यादिशब्दव्युत्पादनाय तदवयवानां लोकप्रसिद्धार्थ-मुपजीवन्त्यान्यायसाम्याज्ज्योतिरादिशब्देष्वपि तस्याभ्यनुज्ञातत्वात् । एवं च यथा डुपचष्पाके डुकृञ्करणे इत्यादौ पाकादिशब्दानां पच्यादिधातुजत्वेपि तेषां लोकप्रसिद्धार्थमादाय धातूनामर्थनिरूपणम् । अन्यथा ह्यन्योन्याश्रयः स्यात् । तथेहाप्यवयवानां विष्णुपरत्वेपि लोकप्रसिद्धार्थमादाय व्युत्पादनं । एवमवयवव्युत्पादनं तदवयवानां लोकप्रसिद्धार्थमादयेति द्रष्टव्यम् । नचैवं लोके लक्षणैवस्यादिति शंक्यम् । अभिधानव्याकरणादिभिः प्रमितस्य लोके मुख्यत्वस्य विनैव बाधकं त्यागायोगात् । न चैतमेवेत्यवधारणं बाधकम् । तस्य प्रमितमुख्यत्वाबाधेनैव ब्रह्मण्येव परममुख्यत्वमन्यत्र नेत्येवं परत्वात् । ब्रह्मणि परममुख्यत्वं च प्रवृत्तिनिमित्तस्य निरवधि-कत्वानन्याधीनत्वाभ्यां युक्तम् । युक्तं च मुख्यवृत्तावेव योगरूढ्योरिव तारतम्यम् । नच सकृत्प्रयुक्तस्यानेकार्थत्वमन्याय्यम् । "राजाकुवल-योल्लासकारी"त्यादिश्लिष्टशब्देषु चंद्रभूपाद्यनेकार्थत्वदर्शनात् । नानार्थ-विवक्षयाप्यक्षमानयेति प्रयोगाच्च । "बहुगणवतुडतिसंख्ये"त्यत्र संज्ञार्थ-स्यापि संख्याशब्दस्य "ष्णांताष"डित्यत्र षट्संज्ञार्थत्वदर्शनाच्च । "षष्ठी-शेष" इत्यत्र शेषशब्दे कर्मादिव्यतिरिक्तार्थत्वोपसर्जनार्थत्वयोः, "हलंत्य" मित्यत्र हल्शब्दे हकारात्परलकारार्थत्वव्यंजनार्थयोर्दर्शनाच्च । "अग्नि-

मूर्धे"ति मंत्रस्य श्रौतआग्नेययागे स्मार्तेऽगारकजपहोमादौ च, "पवित्रंत" इति मंत्रस्येति पवित्रेष्टौदशापवित्रादौ च, "आप्यायस्वे"ति मंत्रस्य सौम्येपत्नीसंयाजे सोमरसस्याप्यायने च विनियोगेन तत्तत्प्रकाशनाया-नेकार्थत्वस्य स्वीकार्यत्वाच्च। "आयंगौ"रितिमंत्रस्य "आत्मदैवतंसौर्यंचे"-त्यनुक्रमणिकायां "दिव्यंसुपर्ण"मितिमंत्रस्य "अत्यासरस्वतेसूर्याये"त्यनु क्रमणिकायां "त्रयःकेशिन" इतिमंत्रस्य "त्रयःकेशिन इत्यग्निः सूर्यो-वायुश्चे"त्यनुक्रमणिकायामनेकार्थत्वोक्तेश्च। निरुक्ते "आनोभरप्रमगंदस्ये"त्यादौ प्रमगंदादिशब्दानां व्यक्तिविशेषेरूढेः, प्रभूतंधनंमामागमिष्यतीति यो ददाति सप्रमगंद इति योगस्य चोक्तत्वाच्च।

"वानात्सूतेर्देवनाद्वासुदेवो वासाद्द्युतेश्छादनात्क्रीडया च (नाच्च)।
बलादसुत्वाद्दातृतोवर्तनाच्च तं वासुदेवं प्रवदंति वेदाः॥
अद्यतेऽत्तिच भूतानि तस्मादन्नं तदुच्यत।" इत्यादिश्रुतौ,
"गतिश्च सर्वभूतानां प्रजानां चापि भारत।
व्याप्ते मेरोदसीपार्थकांतिश्चाभ्यधिका मम।
अधिभूतनिविष्टश्च तदिच्छुश्चास्मि भारत।
क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः॥"

इत्यादिस्मृतौ च वैदिकवासुदेवादिशब्दानामनेकार्थत्वोक्तेश्च। स्वाप्यय-संपत्त्योरन्यतरापेक्षमाविष्कृतंही"त्यत्र सुषुप्तिवाक्यस्य द्व्यर्थतायाः सूत्र-कारेणैव वक्ष्यमाणत्वाच्च "त्रयोर्थाः सर्ववेदेषु दशार्थाः सर्वभारत" इत्यादिस्मृतेश्च।

तदुक्तं कर्मनिर्णये भगवत्पादैः "नच बह्वर्थेषु तात्पर्यकल्पने कल्पनागौरवम्। वचनेनैव प्रतीयमानत्वात्। अर्थस्य कल्पनाभावा" दिति। अन्यत्र च "इति बुद्धौ समारोहादुभयोर्योगरूढयोः। त्यागे च कारणाभावादुभयार्थत्वमिष्यत" इति। किञ्च चक्षुषा घटद्वयस्येव युगपदेकेन शब्देन शक्यार्थद्वयबोधनेनबाधकं। नच सकृत्प्रयुक्तस्य वृत्तिद्वयं नेति नियमः। गङ्गायां मत्स्यो घोषश्चेत्यादौ तद्दर्शनात्। पङ्कज-शब्देन रूढ्यापद्मत्वजातेर्योगेन पङ्कजननस्य च प्रतीतिदर्शनाच्च। नच कर्मविधानाय यजेतेत्यनेनैकवाक्यतामापन्नस्य ज्योतिरादिशब्दस्य ततो व्याघुत्य ब्रह्मज्ञानार्थत्वायोगः। "सुब्रामन्त्रितेसहसुपे"त्यादौ सुबित्यादेः सुपेत्यादिनैकवाक्यतामापन्नस्यापि ततो व्याघुत्य अनुव्यचलदित्यादौ

तिङन्तेन सह समासविधायकत्वदर्शनात् । इष्टसिद्ध्यर्थं बहुस्थलेषु योगविभागस्वीकाराच्च । "भूवादय" इत्यादौ वकारस्यैकवाक्यतात्यागेन मङ्गलार्थत्वदर्शनाच्च । "कम्बलवन्तं न बाधते शीत" मित्यादावेकस्मिन्नेव वाक्ये प्रश्नोत्तररूपत्वदर्शनाच्च । नच पुंवाक्यस्याभिप्रायपरतन्त्रत्वात्त-दनुरोधादनेकार्थता । न त्वपुंवाक्यस्येति शङ्क्यम् । पुंवाक्येप्यनेकार्था-भिप्रायलिङ्गाभावे तदयोगात् । अपुंवाक्येप्यनेकार्थतात्पर्यज्ञापकस्य सत्त्वे तस्यानिवार्यत्वात् । पुंवाक्येऽभिप्रायेण शक्तिसंकोचादेकार्थता । वेदे तु तदभावाद्बाधकभावे यावद्वाक्यार्थतेत्येव न्याय्यत्वाच्च । तदुक्तं शाबर-भाष्ये "परार्थो हि वेदो यथानेनकर्तुं शक्यं तस्मा एष समाम्नाय" इति । "तेजोवैघृतं प्रतितिष्ठंति ह वा एतारात्रीरुपयन्ती"त्यादौ प्राशस्त्यपरार्थ-वादपदातरैः सह प्राशस्त्यलक्षकाणामपि घृतादिशब्दानां स्वार्थभूत-घृतादिपरत्वस्यापि दर्शनाच्च । "अभित्वाशूरनोनुमोनत्वावाँ अन्य" इति द्य्टचे आद्या बृहती उत्तरा पंक्तिरितिस्थिते "पूर्वा बृहती ककुभावुत्तरे" इतिश्रुतिबलाद्बृहत्या आद्या या ऋचश्चतुर्थपादपङ्क्तेरुत्तरस्या ऋचः पूर्वार्धेन प्रग्रथ्यैकां ककुभं सम्पाद्य तस्यां ककुभि चरमं पादं पङ्क्तेरुत्तरार्धेन प्रग्रथ्य ककुभन्तरं सम्पाद्यमिति नवम उक्तत्वेनाद्यऋगादिस्थपादस्य द्वितीयऋगादावन्वयदर्शनाच्च ।

" अपाः पूर्वेषां हरिवः सुतानामथो इदं सवनं केवलं ते ।
ममद्धिसोमं मधुमन्तमिन्द्रं सत्रावृषं जठर आवृषस्व ॥ "

इति संहितास्थायायाज्याया " एता ह्येवैवापाः पूर्वेषां हरिवः सुताना-मेवैवाहीन्द्रमथो इदं सवनं केवलं ते एवाहि शक्रो ममद्धि सोमं मधुमन्त-मिन्द्रवशीहि शक्रः सत्रावृषं जठर आवृषस्वे"त्यारण्यकस्थेन "एवा-ह्येवैवे"त्यादिनाऽन्वयदर्शनाच्च । "आदित्तेहर्यताहरीववक्षतु"रित्यस्य "जुषाण इन्द्र हरिभिर्न आगही"त्यादेश्च "आदित्तेह जुषाण इन्द्र हरिभिर्न आगही"ति व्यतिषंगदर्शनाच्च । अन्यत्रादृष्टत्वेपि प्रकृत उभयार्थत्व-स्योक्तश्रुत्यादिसिद्धत्वेनानिवार्यत्वाच्च । तदुक्तं शाबरभाष्ये "किं हि वचनं न कुर्यान्नास्ति वचनस्यातिभार" इति । वार्तिके च

गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम् ।
वेदोयमाश्रयत्यर्थं कोनु तं प्रतिकूलयेत् ॥ "

इति "सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्यम् ।

अवान्तरं तत्परत्व"मित्यादिश्रुत्या "परस्य वाचकाश्शब्दाः (भगवद्वाचकाः शब्दाः) समाकृष्येतरेष्वपि। प्रयुज्यन्ते हि सततं लोकवेदानुसारत" इत्यादिस्मृत्या चोभयार्थत्वावगमात् । स्विष्टकृदादीनां दृष्टादृष्टोभयार्थत्ववत् दध्यादीनां क्रत्वर्थत्वपुरुषार्थत्ववत् मन्त्राणां स्फ्यादिद्रव्यतुल्यतयाकारकत्वेपि द्रव्यदेवतास्मारकत्ववत् स्मारकत्वेपि "आत्मनोङ्गत्वबोधेन मन्त्रः प्रामाण्यमश्नुत" इत्युक्तत्वेन प्रामाण्यवच्चोभयार्थस्मारकत्वोपपत्तेश्च। किञ्च विधिमन्त्राधिकरणवार्तिके "विनियुक्तमन्त्राणामविधायकत्व"मिति शाबरभाष्यापातप्रतीतमर्थम्।

"विधिशक्तिर्नियोगेन न मन्त्रस्यापनीयते ।
स्वतो विधास्यति ह्येष नियोगात्स्मारयिष्यति ॥
विधायकं सदप्यर्थं ब्राह्मणं स्मारयत्यपि ।
मन्त्रतस्तु विरोधे स्यादित्यत्रैतद्वदिष्यति ॥"

इत्यादिना दूषयित्वा "यस्योभयं हविरार्तिमार्च्छेद्यदि सोमं न विन्दे" दित्यादिब्राह्मणवाक्येषु यच्छब्दादिभिरिव "दामि निर्वपामि अग्नीदग्नीन्विहरे"त्यादिमन्त्रेषूत्तमामन्त्रणादिभिर्विधिशक्तिप्रतिबन्धादेवाविधायकता। नतु विनियोगेन। "देवांश्चयाभिर्यजते ददाति चे"तिमन्त्रस्यापि गोदैवत्येयागे याज्यात्वेन विनियुक्तस्य यस्मिन्कर्मणि विनियोगस्तद्विधायकत्वाभावेपि गोयागे गोदानविधायिता न विरुध्यते। यच्छब्देन विधिप्रतिबन्धात्तु यस्योभयमित्यादिब्राह्मणवाक्यस्यैव न विधायकतेति भाष्यस्य तात्पर्यमुक्तम्। एवंच प्रकृतेपि तत्र तत्र विनियुक्तानां सर्वमन्त्राणां वाचस्तोमे विनियोगवत् "यद्वैकिञ्चैतदध्यगीष्टानामैवैत"दिति कृत्स्नवेदस्य ब्रह्मणि विनियोगेन ब्रह्मपरत्वं स्वतः कर्मादिरूपार्थान्तरपरत्वं चास्तु। अस्ति च प्रकृतेऽर्थान्तरेपि विनियोगः। "अवान्तरंतत्परत्व"मित्यादिश्रुतेः। अत एव वर्णस्वरादिसमन्वयादेव वर्णक्रमस्वराद्यध्ययनम्। अन्यथा तदंशेऽध्ययनविधेरदृष्टार्थत्वं स्यात्। अत एव च

"वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।
तावन्ति हरिनामानि कीर्तितानि न संशयः ॥

इत्यध्यापकप्रसिद्धिः। यदि चोक्तप्रमाणप्रसिद्धोपि वाक्यान्तरेष्वदृष्टत्वाद्वेदे पदादिसमन्वयो न स्यात्तर्हि वाक्यान्तरेष्वदृष्टत्वात्पदक्रमाद्यध्ययनमपि वेदे न स्यात्। नच ज्योतिष आयजेत इति पदच्छेदे ज्योतिषा

यजेत इत्यादिपदाध्ययनविरोधः। "कश्छन्दसां योगमावेदे"ति श्रुत्या-योगवृत्त्या पदसमन्वयस्यासर्वाधिकारित्वोक्तेः प्रायेण सर्वेषां वाक्य-समन्वय एवाधिकारेण तदुपयुक्तपदानामेवाध्ययनात्। "जातमोत" मित्यनुव्याख्यानोक्तं निर्वचनं च गुणप्रकाशकत्वाद्गुणज्ञापने प्रवृत्तया "तं यच्छत"मित्यादिश्रुत्योपलक्षणपरया विवक्षितमिति न दोषप्रकाशक-निर्वचनान्तरोत्प्रेक्षा युक्ता। तस्मात्

आम्नायस्य प्रमाणस्य प्रमेयस्येश्वरस्य च।
अलौकिकत्वादुचितः सम्बन्धोऽलौकिकस्तयोः॥

अत्र न्यायविवरणे शब्दानां ब्रह्मणि महायोगो महारूढियोगश्चेति वृत्ति-द्वयम्। लोके तु रूढिर्योगो योगरूढी रूढोपचारो रूढलक्षणोपचारो लक्षणेति वृत्तिसप्तकमित्युक्तम्। तत्र चान्यत्रप्रसिद्धानामिन्द्रादिशब्दानां ब्रह्मणि महायोगः। प्रवृत्तिनिमित्ताधिक्यात्। तदेकनिष्ठानां नारायणादि-शब्दानां तु महारूढियोगः। प्रयोगबाहुल्यान्निमित्ताधिक्याच्च। महा-रूढिस्तु न संभवति। "सायोगादेवलभ्यत" इत्यनुव्याख्याने ब्रह्मणि विद्वद्रूढेर्योगं विनाभावोक्तेः। इन्द्रादिशब्दानामपि ब्रह्मणि विद्वद्रूढेः सत्त्वेपि नारायणादिशब्दानामिवाविद्वद्रूढेरसत्त्वात्ततोभेदः। इतरवृत्ति-सप्तकस्वरूपं तु टीकाकारैरेवात्र सुधायां च व्युत्पादितम्। अत्र चाद्ये सूत्रे स्वपक्षसाधकोक्तिः।

तत्र यद्यपि विषयवाक्ये वसंतादिशब्दः प्रथमस्तथापि कर्मातर-प्रकृतित्वफलकारणत्वादिना प्रधानभूतज्योतिष्टोमवाचित्वात् सूत्रे ज्योतिशब्दः प्रयुक्तः। उपक्रमादिति पंचमील्यब्लोपनिमित्ता। अत एव सुधायां "उपक्रमं विधाये"त्युक्तं द्वितीये बाधकोद्धारः। अत्र च "कल्पनोपदेशा"दित्यस्य लोकतः कृततत्तद्वाचित्वमबाधित्वैव लोक-कृतयोगवृत्तेः कल्पनया व्युत्पादनेन ब्रह्मणः सर्वशब्दवाच्यत्वेनोप-देशादिति वा ब्रह्मणः सर्वशब्दवाच्यत्वेन कल्पनाया उपासनाया उपदेशादिति वार्थः॥

अन्येतु॥ अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां-सरूपा" इति श्वेताश्वतरवाक्यस्थाप्रजास्रष्टृत्वेनोक्ताऽजासांख्याभिमता त्रिगुणाप्रकृतिरिति प्राप्ते इयमजासांख्याभिमतेति न निश्चेतुं शक्यम्। अजात्वादेः सर्वत्रापि कथंचित् सुसंपादत्वात्। विशेषहेतोश्चाभावात्।

यथा "एषह्यर्वाग्बिलश्चमस" इत्यत्रायं नामासौ चमस इति निश्चेतुमशक्यम्। अर्वाग्बिलत्वादेः सर्वत्रापि कथंचित्सुसंपादत्वात्। विशेषहेतोश्चाभावादिति चमससूत्रेणोक्त्वा ज्योतिःसूत्रेण प्रत्युतेयमजाज्योतिरुपक्रमैव तेज आदिरूपैव। ननु सांख्याभिमता "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्ये"ति श्रुत्यंतरे तेजोबन्नानामेवलोहितशुक्लकृष्णरूपवत्त्वेनाधीतत्वात्। प्रकृतिपक्षे लोहितादिशब्दानां रज आदौ गौणत्वापत्तेश्चेति समाहितम्। चमससूत्रं च ज्योतिरधिकरणशेष इत्याहुः। तन्न। "इदं तच्छिर एष ह्यर्वाग्बिलश्चमस" इत्यत्र शिरोरूप विशेषपरत्वस्यस्फुटत्वेनाविशेषे दृष्टांतत्वायोगात्। ब्रह्मलक्षणस्य कारणत्वस्य प्रधानेनातिव्याप्तिः किंतु तेजोबन्नेष्विति समर्थनस्य निष्फलत्वाच्च। किंच—

अजाचेज्ज्योतिरादिः स्यादजैकत्वाद्यसंभवः।
अविद्येति तु पक्षे स्याल्लोहितत्वाद्यसंभवः॥

इयमजासिद्धांते किं तेजोबन्नरूपा किं वाऽविद्यारूपा। नाद्यः। तेषां जनिमत्त्वादनेकत्वाच्च "अजामेका"मित्याद्ययोगात्। नच त्रिवृत्करणादेकत्वं। तासां त्रिवृतं त्रिवृतमेकैकां करवाणी"ति प्रत्येकं त्रिवृत्करणश्रवणेन त्रिवृत्कृतसमुदायानामपि त्रित्वात्। नन्वेतत् "कल्पने"तिसूत्रेणैव परिहृतम्। यथा "आदित्योवादेवतामध्वि"त्यादावादित्ये मधुत्वं कल्प्यते तथा तेजोबन्नेष्वजात्वं छागीत्वं कल्प्यत इत्यस्यार्थ इति चेत् कल्पनाऽऽरोपो वा गौणीवृत्तिर्वा। नाद्यः। पामरमनोरंजनार्थं काव्यादाविव श्रुतिषु कल्पनोपदेशो फलाभावात्। अन्यथा सांख्याभिमतप्रकृतावेव लोहितत्वाद्यारोप इति स्यात्। देवमध्वित्यादिकं तु मधुशब्दवाच्यत्वपरमित्युक्तम्। नच अजाशब्दोऽनन्यगतिकः योगस्य संभवात्। "शरीरं रथमेव च गौरनाद्यंतवती"त्यादौ तु शरीरप्रकृत्यादौ रथगवादिशब्दा गौणाः। न त्वारोपनिमित्तकाः। न द्वितीयः। योगेन मुख्यत्वसंभवे गौणात्वायोगात्। लोहितादिविशेषणशब्दानामेव प्रकृतौ गौणत्वस्य न्याय्यत्वेन विशेष्यतया प्रधानभूताजाशब्दे तस्यान्याय्यत्वाच्च। किंच "गौरनाद्यंतवतीभूतभाविनीसिताऽसिताचरक्ताचे"ति श्रुत्यंतरोक्तैवेह प्रत्याभिज्ञायते। साचानाद्यंतवतीत्वान्नतेजोबन्नरूपा। लोहितादिशब्दानां रूपपरत्वं चायुक्तम्। "देवात्मशक्तिं स्वगुणै-

निगूढा ''मिति वाक्यशेषे सत्त्वादिषु प्रसिद्धगुणशब्दश्रवणात् । स्वीकृता च त्वयापि शक्तिवाक्यस्याविद्यापरता । नाप्यविद्येति द्वितीयः । तत्र लोहितादिरूपाभावात् । कार्यावस्थायां रूपाश्रयत्वं तु प्रकृतावपि युक्तम् । ज्योतिरित्यादिसूत्रद्वयविरोधश्च । तस्य अजातेजोबन्नरूपेत्येवं परत्वे न त्वया व्याख्यातत्वात् । किंच त्रिगुणमनादिभावरूपं प्रकृत्यादिसंज्ञं जगदुपादानं त्वयापि स्वीकृतम् । सांख्याभिमतं तु स्वातंत्र्यं द्वितीये सांख्यप्रक्रियायां निरसिष्यते । निराकृतं च " तदधीनत्वा ''दित्यत्रेति व्यर्थमिदमधिकरणम् । तदुक्तं अनुव्याख्याने—

" तेजोबन्नात्मकं वापि यद्युपादानमिष्यते ।
अनाद्येवापराधः कः प्रधानमिति चोदित" ॥

इति ॥ ज्योतिःसूत्रे उपक्रमेत्यपपाठाश्रयणे ह्यजपादमध्याहार्यम् । तेजसस्तद्रूपमिति श्रुत्यनुगमाय च लाघवाय च तेज आदिरिति च सूत्र्येत । कल्पनेतिसूत्रेऽनुपपत्तिस्तूक्तेति ॥

केचित्तु ॥ चमससूत्रस्य परोक्त एवार्थः । ज्योतिस्सूत्रस्य ज्योतिर्ब्रह्म । इयमजाज्योतिरुपक्रमाब्रह्मकारणिका । तैत्तिरीयशाखायां "अणोरणीया''नित्यादिना ब्रह्मोक्त्वा " सप्तप्राणाः प्रभवंति तस्मा''दित्यादिना ततःसृष्टिं चोक्त्वा " अजामेका''मिति मंत्रे ब्रह्मकार्याह्यजाऽधीयत इत्यर्थ इत्याहुः । तन्न । अजामितिमंत्रेऽजायाब्रह्मकार्यत्वाप्रतीतेः । ननु यथा "समिधोयजती ''त्यादावंगत्वाश्रयणेपि दर्शपूर्णमासप्रकरणात्तदंगता तथात्रापि सृष्टिप्रकरणादजायाः सृज्यत्वमिति चेन्न । सृष्टिप्रकरणेपि तदाकांक्षितोपादानत्वेनाप्यजाया उक्तिसंभवेन सृज्यत्वासिद्धेः । समिदादिस्त्वंगत्वेनैव दर्शाद्याकांक्षित इति वैषम्यं । किंच प्रकृतेः कार्यत्वे "गौरनाद्यंतवती प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपी''त्यादिश्रुतिस्मृतिविरोधः । अजात्वविरोधश्च ।

ननु प्रकृतेः कारणात्मनाऽजात्वं । स्वकार्यभूततेजोबन्नात्मनाकार्यत्वलोहितत्वादि । अत एव न श्रुत्यादिविरोधोपीति'' "कल्पने''तिसूत्र एवोक्तं । तन्न कल्पनाशब्दस्य " यथापूर्वमकल्पय''दित्यादाविव सृष्टिपरत्वादिति चेन्न । अजात्वलोहितादित्वयोः स्वतः प्रातैकविषयत्वस्यागेनावस्थाभेदेन विभिन्नविषयत्वायोगात् । अजांसृजमानामिति कारणावस्थायामेव लोहितत्वादिप्रतीतेश्च । किंच प्रकृतिस्वरूपं त्वयापि

स्वीकृतम्। सांख्याभिमतं तु स्वातंत्र्यं "तदधीनत्वा"दित्यत्र निरस्तम्। एवं चाजायाः प्रकृते " ज्योति "रिति सूत्रे ब्रह्मकार्यत्वमनुपयुक्तमेवोक्त्वा तन्निर्वाहाय "कल्पने "तिसूत्रेऽजात्वकार्यत्वयोराकारभेदेनाविरोधसमर्थनं व्यर्थमेवेति ॥

टीकाक्षरार्थस्तु। अधिकारिनियोज्ययजमानेति ॥ अधिकारित्वं फलस्वामित्वावस्था। नियोज्यत्वं विधिप्रेर्यत्वावस्था। यजमानत्वकर्तृत्वावस्था॥ ज्योतिष्टोमादिशब्दव्युत्पत्तिरिति ॥ यद्यपि ज्योतिःशब्द एव सूत्र उपात्तः। अनुव्याख्याने च तस्यैव व्युत्पत्तिर्दर्शिता। तथापि ज्योतिष्टोमशब्दोपीहोदाहरणमिति दर्शयितुं ज्योतिशब्दोपि ज्योतिष्टोमवाचीति दर्शयितुं च टीकायां ज्योतिष्टोमशब्दस्य व्युत्पत्तिर्दर्शिता॥

॥ इति ज्योतिरुपक्रमाधिकरणम्॥ २॥

---

## अथ नसंख्योपसंग्रहाधिकरणम्

## ॥ ॐ नसंख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॐ॥

पूर्वत्र प्रसिद्धस्य ज्योतिरादिशब्दनिमित्तस्यासत्त्वेपि ब्रह्मणि योगलभ्यमप्रसिद्धं निमित्तमस्तीत्युक्तम्। अत्र तु पंचादिशब्दानां प्रसिद्धमेव निमित्तं ब्रह्मण्यस्तीत्युच्यत इत्यवांतरसंगतिः। अत्र पंचजनादिशब्दाः किमन्यपराः किंवा ब्रह्मपरा इति चिन्ता। तदर्थं पंचत्वसंख्याधाराधेयत्वादेर्भिन्ननिष्ठत्वमिति सामान्यन्यायस्यापवादकं नास्युतास्तीति। तदर्थं "प्राणस्य प्राण "मित्यादिवाक्यशेषस्थषष्ठीनिर्दिष्टाः प्राणादयः पंचजनशब्देनोच्यंते किंवा द्वितीयानिर्दिष्टा इति।

पूर्वपक्षस्तु॥ "यस्मिन् पंचपंचजना आकाशश्च प्रतिष्ठित" इति बृहदारण्यकवाक्यस्थपंचजनादिशब्दवाच्यो न विष्णुः। तेषां बहुत्वविशिष्टवाचित्वात्। बहुत्वस्य चाद्वितीये ब्रह्मण्ययोगात्। नन्वन्यगतबहुत्वस्य ब्रह्माधीनत्वात् "तदधीनत्वा"दित्युक्तन्यायेन तत्र शब्दवृत्तिरस्तु। नच वशीकृतबहुजनेपि राजनि बहुत्ववाचिवृत्तिर्न दृष्टेति वाच्यम्। तत्र बहुत्वस्य राजानधीनत्वात्। अवरादिशब्दवदन्यत्रादर्शनेपि ब्रह्मणि वृत्तिसंभवाच्च। न चावरादिषु "सोवरयति "इति विशेषश्रुतिरस्ति।

न त्विहसेति वाच्यम् । " तदधीनत्वा "दित्यत्र शब्दमात्रे स्वातंत्र्यं निमित्तमित्युक्तेः । अन्यथाऽव्यक्तादिशब्देषु विशेषश्रुत्यभावेन स्वातंत्र्यं निमित्तं न स्यात् । नच राजा जयीत्यादौ तद्गतत्वस्यासंभवादेव स्वातंत्र्यस्य ग्रहणम् । इह तु " पंचजना " इत्यस्याब्रह्मपरत्वे तद्गतत्वं संभवतीति वाच्यम् । स्वातंत्र्यस्य मुख्यत्वात् । नच मुख्यसंभवएवामुख्यग्रहणं युक्तम् । संभवति चात्राप्यव्यक्तादिशब्देष्विव ज्ञेयत्वावचनादिहेतुभिर्ब्रह्मपरत्वाध्यवसायः । तस्मान्न पूर्वपक्षोदय इति चेन्न । यथा " ज्योतिरुपक्रमा "दिति पूर्वोक्तपदसमन्वयेस्थितएवेह वाक्यसमन्वयः संभवति न वेति विचारः यथा वा " ज्योति "रित्यत्र तदधीनत्वन्याये स्थित एव गुणपूर्त्यर्थं पदसमन्वयविचारः तथा तदधीनत्वन्याये स्थित एव तमाच्छाद्य ब्रह्मणि बहुत्वाद्यस्ति न वेतीह विचारात् । अन्यथैंद्रादिशब्दानामपि तदधीनत्वादेव वृत्तावैश्वर्यादिगुणासिद्धिः । अवरत्वादौ तु सर्वथा तद्गतत्वासंभवात्तदधीनत्वन्याय उक्तः । टीकायामिह तदधीनत्वन्यायासंभवोक्तिरप्येतदभिप्राया । यद्वा बहुत्ववाचिशब्देषु स्वातंत्र्यस्यनिमित्तत्वेबद्धादिशब्दवदमंगलत्वाभावाद्वशीकृतबहुजने राज्ञि तत्प्रयोगापत्तेर्नेतन्निमित्तमित्यभिप्राया । अत एव भाष्ये " एतेन सर्वे व्याख्याता " इत्यत्रैव तदधीनत्वन्याय उक्तः । शून्यादिशब्दानां स्वातंत्र्यनिमित्तकत्वेप्यमंगलत्वेन राज्ञ्यप्रयोगोपपत्तेः । न तु " नसंख्योपसंग्रहा "दित्यादौ । एवमुत्तरत्र " संभूत " इत्यादिशब्देषु टीकायां स्वातंत्र्यस्यानिमित्तत्वोक्तिरपि द्वेधा व्याख्येया । ननु " गुहांप्रविष्टा "विति न्यायेन ब्रह्मणि द्वित्ववद्बहुत्वमपि सिद्धम् । एकत्वविरोधित्वे द्वित्वबहुत्वयोरविशेषात् । नच तत्रानेकत्वं प्रत्ययार्थः । इह तु प्रातिपदिकार्थः । प्रत्ययास्वारस्यं च सह्यम् । नतु प्रातिपदिकस्येति शंक्यम् । अनेकत्वस्यैव तत्र साधितत्वेन तद्वाचिनोर्द्वयोरपि स्वारस्यादिति चेन्न । औत्सर्गिकं ह्यनेकत्वसंख्याया भिन्नवृत्तित्वं । अन्यथा " द्वासुपर्णे "त्यादावपि भेदो न सिद्ध्येत् । तच्च " ऋतं पिबंता "वित्यत्र बाधकैरपोदितम् । न चेहापवादकमस्ति । नच " प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोतस्यश्रोत्रमन्नस्यान्नं मनसो मन " इति वाक्यशेषोपवादकः । " प्राणस्यप्राणश्चक्षुषश्चक्षु "रित्यादि श्रुत्यंतरेण प्राणप्राणत्वादेर्ब्रह्मलिङ्गत्वादिति वाच्यम् । द्वितीयानिर्दिष्टानां प्राणादीनां ब्रह्मत्वेपि षष्ठीनिर्दिष्टानामब्रह्मत्वात् । तेषामेव च " यस्मिन्निति सप्तम्या ब्रह्माश्रितत्वेनोक्तपंचजन-

त्वस्य न्याय्यत्वात्। किञ्च "यस्मिन्पंचजना" इति पंचजनानां ब्रह्माश्रितता भाति। नच ब्रह्मस्वाश्रितम्। तस्मात् षष्ठीनिर्दिष्टा अब्रह्मात्मका एव प्राणादयः पंचजनादिशब्दवाच्याः। न तु द्वितियानिर्दिष्टं ब्रह्म तद्वाच्यमिति॥

सिद्धान्तस्तु—द्वितीयांतविनिर्दिष्टं प्रधानं प्राणपूर्वकम्।
अर्थतः शब्दतश्चैव न तु षष्ठ्यंतशब्दितम्॥

षष्ठीनिर्दिष्टा हि प्राणादयोद्वितीयानिर्दिष्टप्राणाद्यधीनत्वात्तदवच्छेदकत्वाच्चार्थतः शब्दतश्चाप्रधानभूताः। नच "पंचजना" इत्यस्य प्रधानपरत्वे संभवत्यप्रधानपरता युक्ता। नच "यस्मि"न्निति सप्तमी स्वारस्याया प्रधानपरता। प्रयाजशेषन्यायेन प्रातिपदिकस्वारस्याय विभक्त्यस्वारस्यस्य सह्यत्वात्। विभक्त्यस्वारस्यं च नेति वक्ष्यते। नच ब्रह्मणएकत्वात्पंचत्वायोगः। षष्ठीनिर्दिष्टानामपि प्राणादीनां प्रत्येकं बहुत्वेन त्वत्पक्षेपि पंचत्वायोगात्। नहि ब्रह्मण एकस्यैव प्राणादेः प्राणत्वादिः। किंत्वनंतानां प्राणादीनाम्। एवं च एकत्र हि यथा पंचसंख्यानैवोपपद्यते। तथानंतेषु पंचत्वसंख्यापि न च युज्यते॥

अथ प्राणादीनां प्रत्येकं स्वरूपेण बहुत्वेप्येकवचननिर्देशात् प्राणत्वादिधर्मैक्याद्वा प्रत्येकमैक्यम्। तथा च मिलितानां पंचत्वमिति चेत्तर्हि ब्रह्मस्वरूपेणैकमपि पंचभिः शब्दैर्निर्देशाद्वा प्राणत्वचक्षुष्ट्वादिधर्मपंचकयोगाद्वा पंचेत्युच्यताम्। यथा प्रयाजाः स्वरूपेण पंचाप्यावृत्तिमात्रेणैकादशेत्युच्यंते। यथा च "द्वे पौर्णमास्या"वित्यादावेकमेव पौर्णमासीकर्म द्वे इत्युच्यते तद्वत्। यथा चानेकत्वस्य भिन्ननिष्ठत्वमौत्सर्गिकं तथा वैदिकसर्वशब्दानां प्रसिद्धनिमित्तस्य तद्गतत्वं निमित्तीकृत्य ब्रह्मणि वृत्तिरप्यौत्सर्गिकी। अवरादिशब्देषु त्वसंभवात्तत्यागः। साधितं च "गुहा-" मित्यत्रैकस्याप्यनेकत्वम्। युक्तं च ब्रह्मणः स्वाश्रयत्वम्।

आधाराधेयभावो हि भेदाभावेपि युज्यते।
कालः सदास्ति देशोस्ति सर्वत्रेत्यादिभानतः॥

एवंच यावंति नियम्यानि नियामकभगवद्रूपाण्यपि तावंतीति शरीरगतप्राणादिपंचकनियामकरूपेषु पंचत्वम्। तथा तद्गताकाशनियामकरूपस्य षष्ठत्वादाकाशश्चेतिसमुच्चयः। आधारभूतशरीरनियामकरूपस्याधेयभूतप्राणादिनियामकरूपेभ्योतिरिक्तत्वात्तानि प्रत्याधारत्वं च युक्तम्। तदुक्तं न्याय-

विवरणे "बहुरूपत्वादधिकरणाधेयत्वादितस्यैव युज्यत" इति। अत्रचाद्ये सूत्रे पूर्वाधिकरणोक्तसाधकैरेवेहापि ब्रह्मपरत्वसिद्धेर्बाधकमात्रमुद्धृतम्। तत्र च "संख्योपसंग्रहा"दित्यनेनोक्ताया बहुत्वानुपपत्तेः "नानाभावा" दित्यनेन निरासः। अपिशब्दसमुच्चितायास्त्वाधारत्वाद्यनुपपत्तेः "अतिरेकाच्चे"त्यनेन। द्वितीये के ते पंचत्वाश्रयभगवद्रूपविशेषा इति शंकायां तेषां मुखत उक्तिः। सिद्धांतसाधकोक्तिस्त्वर्थात्। तृतीये तु शाखांतरेपि पंचत्वसंपादनमिति सूत्रक्रमः। अत्र "यस्मिन् पंचपंचजना" इति मंत्रस्य शाखाद्वयेप्येकपंचकपरत्वाय ज्योतिरन्नशब्दयोरेकार्थत्वं वा तयोः भिन्नार्थत्वाय शाखाभेदेन पंचकद्वयं वेति द्रष्टव्यम्।

अन्येतु "यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठित" इति वाक्ये समस्तेन पञ्चजनशब्देनोक्तानां समाहाराणामसमस्तेनान्येन पञ्चशब्देन पञ्चत्वसंख्यान्वयः प्रतीयते। एवंच पञ्चपञ्चकानि पञ्चविंशतिः संपद्यते। यथा पञ्चपञ्चपूल्य इत्यत्र पञ्चविंशति पूल्यः। पञ्चजना इति पुल्लिङ्गं तु छान्दसम्। तस्मात् पञ्चविंशति तत्वानामुपसङ्ग्रहात् प्रधानादीनां श्रुतिमत्त्वमिति प्राप्ते सिद्धान्तः न सङ्ख्योपसङ्ग्रहादपि प्रधानादीनां श्रुतिमत्त्वम्। कस्मात्। नानाभावात्। नाना ह्येतानि पञ्चविंशतितत्वानि। नैषां पञ्चशः पञ्चशः साधारणधर्मोस्ति। येन पञ्चविंशतेरन्तराले पञ्चपञ्चसङ्ख्याः निवेशेरन्। न ह्येकं निबन्धनं विना नानाभूतेषु द्वित्वादिका सङ्ख्यास्ति। अतिरेकाच्च। अतिरेकोपि भवत्यात्माकाशाभ्यां पञ्चविंशति सङ्ख्यायाः। आत्मनो हि पञ्चविंशतावन्तर्भावे यस्मिन्नित्यधिकरणत्वोक्तिविरोधः। आकाशस्य तु पृथगुक्तिविरोध इत्याहुः। तत्र ब्रूमः।

पञ्चविंशतितत्वानि श्रुतिस्मृतिसमाजतः।
प्रमितान्यपलप्यन्ते कथं वैदिकमानिना॥

किं पञ्चविंशतितत्त्वान्येवाप्रामाणिकानि किं वै तद्वाक्यं न तत्परम्। नाद्यः। "तं षड्विंशमिति प्राहु"रिति "तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति महानव्यक्ते लीयत" इति "यस्याहङ्कारः शरीरं यस्य बुद्धिः शरीरं यस्याव्यक्तं शरीर"मित्यादिश्रुतिभिः "पञ्चभिःपञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा। एतच्चतुर्विंशतिकं गणं प्राधानिकं विदु"रिति "त्रिविधोयमहङ्कारो महत्तत्वादजायते"त्यादि स्मृतिभिश्च पञ्चविंशतितत्त्वानां प्रमितत्वात्। नान्त्यः। अस्माकमविरोधात्। तावता तेषां

अशब्दत्वासिद्धेश्च। यच्चोक्तं नानाभावादिति तन्न। पृथिव्यादिषु भूतत्वस्य शब्दादिषु तन्मात्रात्वस्य घ्राणादिषु बाह्यज्ञानेन्द्रियत्वस्य वागादिषु कर्मेन्द्रियत्वस्य महदहङ्कारमनःप्रकृतिपुरुषेषूक्त-विंशत्यन्यत्वस्य चोपसङ्ग्राहकस्य सत्त्वात्। अन्यथा "पञ्चभि"रित्यादि स्मार्तनिर्देशस्याप्ययोगात्। ननु श्रुतावाकाशात्मनोः पृथगुक्तत्वात्तदतिरेकपरिहाराय सत्त्वरजस्तमोरूपान् प्रकृतिभागानादाय सत्त्वरजस्तमोमहदहङ्काराः पृथिव्यप्तेजोवायुघ्राणानि रसनचक्षुस्त्वक्श्रोत्रवाचः पाणिपादपायूपस्थमनांसि शब्दस्पर्शरूपरसगन्धाः इति पञ्चपञ्चकानि वाच्यानि। तत्र चाद्ये पञ्चकचतुष्टयेनास्त्युपसङ्ग्राहकधर्म इति चेन्न। आकाशस्थाने घ्राणस्य घ्राणस्थाने वाचो वाक्स्थाने च मनसो निवेशन उपसङ्ग्राहकाभावेप्याकाशमात्रस्थाने मनो निवेश्य सत्त्वादि पञ्चकस्य "मनसस्तुपराबुद्धि" रित्यादि श्रुतिसिद्धेन मनःपरत्वेन पृथिव्यादेश्च विंशत्यतिरिक्तत्वेन क्रोडीकरण उपसङ्ग्राहकाणां सत्त्वात्। कथञ्चास्मिन्पक्षेऽतिरेकः। आकाशात्मातिरिक्तत्रयोविंशति तत्त्वेषु प्रकृतिभागोपादानेन पञ्चविंशतित्वसङ्ख्यानिर्वाहात्। नच वाच्यं प्रकृतिभागोपादानेन पञ्चविंशतित्वनिर्वाहे नानाभावोऽन्यथात्वतिरेक इति। तथात्वे नानाभावातिरेकयोर्वैकल्पिकत्वेन सौत्रस्य चशब्दस्य समुच्चयार्थत्वोक्त्ययोगात्। किं च किमुपसङ्ग्राहकाभावे कुत्रापि द्वित्वादिका संख्या नास्ति किंवा महासंख्यायामवान्तरसंख्या नास्ति। आद्ये त्वत्पक्षेपि प्राणचक्षुश्श्रोत्रान्नमनस्सुपंचत्वं न स्यात्। नान्त्यः। "पञ्चसप्त च वर्षाणि नववर्षशतक्रतुः। व्रतमेतदनुष्ठेयं वर्षाणि नवपञ्चचे"त्यादावुपसङ्ग्राहकाभावेपि महासंख्यायामवांतरसंख्यादर्शनात्। तस्मात्परकीयाद्यसूत्रव्याख्यानयुक्ता। द्वितीयेपि श्रुतौ षष्ठीनिर्दिष्टाः प्राणादयः सूत्रे गृह्यन्त इति यदुक्तं तदस्मदीयपूर्वपक्ष एव निक्षिप्य दूषितम्। किंच तृतीयसूत्र एकवचनान्तेन "ज्योतिषे" त्यनेन "ज्योतिषां ज्योति"रिति श्रुतावेकवचननिर्दिष्टस्यैव ज्योतिषो ग्राह्यत्वात् द्वितीयसूत्रेपि प्राणादिशब्देन श्रुतौ द्वितीयानिर्दिष्टा एव प्राणादयो ग्राह्याः। एतेनैव केषांचित्पक्षोपि निरस्तः। किंच तत्पक्ष एतच्छास्त्रपूर्वभागे पूर्वतन्त्रे "सन्दिग्धे तु वाक्यशेषा"दित्यत्रैव वाक्यशेषान्निर्णयस्योक्तत्वात् "प्राणादयोवाक्यशेषा"दिति पुनरिह तदुक्तिरयुक्ता। ननु तत्र "तेजोवैघृत"मिति वाक्यशेषस्यघृतपरत्वेन

निर्णीतत्वात्तदनुसारेण "अत्ता" इत्यस्य सन्दिग्धस्य निर्णयः । इह तु "प्राणस्य प्राण"मिति वाक्यशेषस्य नेन्द्रियपरत्वं निर्णीतम् । तत्रा-निन्द्रिययोः प्राणान्नयोः श्रवणात् । इन्द्रियत्वनिर्णयं च विना न प्राणादीनां पञ्चत्वयोग्यत्वम् । संख्यानिवेशकोपाध्यभावादिति शङ्कायां बहूनां चक्षुःश्रोत्रमनःशब्दानामनुकूलतया द्वौप्राणान्नशब्दाविंद्रियपरौ । स्पर्शे-नेन्द्रियं हि प्राणशब्दार्थः । तस्य वायुसम्बन्धित्वात् । अन्नशब्देन तु पृथिवीवाचिना पृथिवीसम्बन्धिघ्राणेन्द्रियम्, अद्यतेऽनेनेति व्युत्पत्त्या रसनेंद्रियं च गृह्यते । घ्राणरसनयोस्तन्त्रेणोपादानात्पञ्चत्वमप्यविरुद्धम् । तथा चात्रापि वाक्यशेषस्येन्द्रियपरत्वेन निर्णीतत्वात्तदनुरोधात् "पञ्च पञ्चजना" इत्यस्यापींद्रियपरतेति वक्तुं प्राणादिसूत्रमिति न पुनरुक्तिरिति चेन्न । बह्वनुग्रहन्यायस्यापि पूर्वतन्त्र एवोक्तत्वात् । टीकाक्षरार्थस्तु स्पष्टः ॥ इति नसंख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

---

## अथ आकाशाधिकरणम्

## ॥ॐ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॐ॥

अस्त्वेकस्यैवाधाराधेयभावः । कालस्सदास्तीत्यादौ दर्शनात् । नतु कार्यकारणभावः । काप्यदर्शनादित्याक्षेपादनंतरसंगतिः । अत्र "आत्मन आकाश" इत्यादिवाक्यस्थाकाशादिशब्दाः किमन्यपराः किं वा ब्रह्मपरा इति चिंता । तदर्थं "नामानि सर्वाणी"त्यादिश्रुतिस्थसर्व-शब्दस्य संकोचे हेतुरस्ति न वेति । तदर्थं जन्यजनकभावः किमेकस्य न युक्त उत युक्त इति ॥

पूर्वपक्षस्तु ॥ नैत आकाशादिशब्दा ब्रह्मपराः । अकार्ये ब्रह्मणि कार्यत्वस्य विरोधात् । स्वकार्यत्वस्य तु सुतरां विरोधात् । व्यंग्य-व्यंजकाभावस्याप्येकस्मिन् विरोधात् । उक्तबाधकेन च "नामानि सर्वाणि" इत्यादेरन्यविषयत्वेन संकोचादिति ॥

सिद्धान्तस्तु ॥ आकाशादिशब्दानां ब्रह्मपरत्वे न तावत्साधकांतरं वाच्यम् । "तल्लिंगा"दित्यत्रानुव्याख्यानोक्तन्यायेनेशाधीनत्वे सिद्धे "तदधीनत्वात् ज्ञेयत्वावचनात्, चमसवदविशेषात्" इत्यादिभिरेव तत्सिद्धेः । नापि कार्यत्वं बाधकम् । द्युभ्वाद्यधिकरणे ब्रह्मण्यपि प्रादु-

भाविरूपजनेरुक्तत्वात्। नापि वायुकरणाकाशकारणस्य ब्रह्मणो वायुकारणत्वायोगोबाधकः। "आनुमानिक"मित्यत्रोक्तन्यायेन महतः परस्मात्परस्यापि महतः परत्ववद्वायुकारणकारणस्यापि वायुकरणत्वोपपत्तेः। न हि यथा स्वपितामहः स्वपितुरेव जनको न तु स्वस्य तथा ब्रह्माकाशस्यैव हेतुर्नतु वाय्वादेरित्यस्ति। सर्वकारणत्वात्। नाप्येकस्यैव कार्यकारणभावानुपपत्तिर्बाधिका ।आकाशवाय्वादिगतत्वेनाभिव्यक्तभगवद्रूपाद्वाय्वग्न्यादिगतरूपांतराभिव्यक्तया व्यंग्यव्यंजकभावरूपस्य कार्यकारणभावस्य बहुरूपत्वेनोपपत्तेः। तदुक्तं न्यायविवरणे "व्यक्त्यपेक्षयाकार्यत्वं चे"ति। अत्र सौत्रश्चशब्दो न केवलमात्मशब्दवाच्यो हरिः। अपि त्वाकाशादिशब्दवाच्यश्चेति टीकायामेव व्याख्यातः। यद्वा न केवलं कारणत्वेन चेत्यर्थः। एवं च कार्यत्वे सति कारणत्वरूपावांतरकारणत्वं भाष्योक्तं सूत्रारूढंभवति। सूत्रे यथा व्यपदिष्टशब्दस्त्वंतर्याम्यधिकरणोक्तन्यायस्मारणार्थमिति टीकायामेवोक्तम्॥

अन्येतु॥ वेदांतेषु क्वचिदाकाशादिका सृष्टिरुच्यते "आत्मनआकाशःसंभूत" इति। क्वचित्तेज आदिका "तत्तेजोसृजते"त्ति। तथा च वेदांतानां विरोध इति प्राप्ते कार्येष्वाकाशादिष्वेव सृष्टिक्रमादिद्वारकं विगानम्। कारणत्वे तु न विगानम्। कुतः। यथा व्यपदिष्टोक्तेः। यथा ह्येकस्मिन् वेदांते चेतनः कारणत्वेन व्यपदिष्टः "सोकामयत बहुःस्या"मिति तथैव "तदैक्षततत्तेजोसृजते"ति वेदांतांतरेष्वप्युक्त इति सिद्धांतः। एवं च सूत्रे कारणत्वेनेत्येतद्विच्छिद्यसप्तम्यंतत्वेन अविच्छिद्य तृतीयांतत्वेन च व्याख्येयमित्याहुः। तन्न। सौत्रचशब्दे तु शब्दार्थत्वस्य कारणत्वेनेत्यस्य विच्छेदाविच्छेदाभ्यामुभयपरस्य च क्लिष्टत्वात्। आकाशादिष्वित्यस्यान्वयार्थं सृष्टिक्रमादिद्वारकविगानशब्दस्याप्यध्याहार्यत्वाच्च।

अध्यायसंगतेः पादसंगतेरप्यभावतः।
पूर्वपक्षानुत्थितेश्च सिद्धांतस्याप्ययोगतः॥

विरोधनिरासे हि द्वितीय एव संगतः॥

ननु तत्र वेदानां मानांतराविरोधो व्युत्पाद्यः। अत्र तु परस्परमिति चेन्न। अविरोधे ह्यवांतरभेदः तस्मिन्नध्याये पादादिभेदे हेतुः नतु तस्माद्बहिर्भावे। अन्यथा समन्वयादिभेदाद्द्वितीयादौ व्युत्पाद्याः स्युः।

किंच द्वितीयेपि "नवियदश्रुते"रित्यादिपादद्वयं वेदांतानां परस्परा-विरोधपरमिति तेपि मतम् । ननु मानांतराविरोध एव द्वितीये व्युत्पाद्यः । परस्पराविरोधस्तु प्रासंगिकः । विप्रतिषेधात्परपक्षाणाम-प्रामाण्य उक्ते तर्हि वेदांतानामपि विप्रतिषेधात्तदिति शंकायां तन्नि-रासादितिचेन्न । पादद्वयव्युत्पाद्यत्वादविरोधत्वोपहितत्वाच्च साक्षात् संगतिसंभवे प्रासंगिकत्वायोगात् । अन्यथा वैपरीत्यापातात् । समं हि मानांतरविरोधपरस्परविरोधोरप्रामाण्यादिपर्यंतत्वम् । किंचायमप्य-विरोधः प्रसंगात्तत्रैवोच्यताम् । तस्मान्नाध्यायसंगतिः । नापि पाद-संगतिः । पादार्थस्य प्रधानाशाब्दत्वस्येहाव्युत्पादनात् । किं चात्र न पूर्वपक्षस्योत्थानम् । "तत्तेजोसृजते"त्यत्र ह्याकाशसृष्टिमनुक्त्वा तेज-स्सृष्टिमात्रमुक्तम् । नत्वाकाशात्पूर्वंतत्सृष्टिः । येन आत्मन आकाशः संभूत" इत्येतद्विरोधः शंक्येत । नहि तत्रोक्तानुक्तिमात्रेणतद्विरोधः । यद्यपि "तत्तेजोसृजत वायोरग्नि" रित्यनयोर्विरोधो भाति । तथापि न तस्येह सिद्धांते निरासः । किंतु वियत्पादे "तेजोतस्तथाह्याहे" त्यत्रैवेतित्वन्मतं । सिद्धांतोप्ययुक्तः । "सत्यं ज्ञानमनंतं ब्रह्मे"ति "एक-मेवाद्वितीय"मिति च प्रकृते शुद्धे ब्रह्मणि कामयितृत्वादेर्विरोधात् । "सदेव सोम्येदमग्रआसीत् असद्वा इदमग्रआसीदित्यादौ कारणेपि विगानदर्शनात् । शंकितस्यकार्यै विगानस्यानुद्धृतत्वाच्च । यदि च कल्पिते कार्यै श्रुतेरतात्पर्यादनुद्धारस्तर्हि वियत्पादादौ तदुद्धारोनुपपन्नः स्यात् । कामयितृत्वादिविशिष्टस्यापि कल्पितत्वेन तदविरोधोप्यत्र न व्युत्पाद्यः स्यात् ।

केचित्तु— "तद्धेदंतर्ह्यव्याकृतमासीत् असद्वा इदमग्रआसी"-दित्यादिवाक्यानां प्रधानपरत्वे प्राप्ते ब्रह्मपरत्वेन सिद्धांत इत्याहुः । तन्न । पूर्वपक्षानुत्थानात् । तथाहि । अव्याकृतासदादिशब्दानां न तावत्प्रधानेरूढिरस्ति । योगो गौणी वा वृत्तिस्तु प्रधान इव ब्रह्मण्यपि संभवति । नच निरवकाशं प्रधानालिंगादिकमस्ति । प्रत्युतेक्षत्याधि-करणन्यायेन चेतनस्यैव कारणत्वनिर्णयादसदादिशब्दानां चेतनपरतैव न्याय्या । पादासंगतिस्तु स्फुटैव । "तद्धेदं तर्ह्यव्याकृतमासी"दित्यादि-वाक्यस्य "महतः परमव्यक्त"मित्यादिवत् प्रधानप्रतिपादनच्छायानु-सारित्वाभावात् । टीकायां "वाक्ययोजनानुपपत्ते"रित्यस्यायमर्थः ।

ब्रह्मण एवात्माकाशादिशब्दार्थत्वे तस्यैकत्वेन क्रमाभावात् "आत्मन आकाशः आकाशाद्वायु"रित्यादिक्रमप्रतिपादकवाक्ययोजनानुपपत्तेरिति॥

॥ इति आकाशाधिकरम् ॥ ४ ॥

---

## अथ समाकर्षाधिकरणम्

## ॥ ॐ समाकर्षात् ॐ ॥

यद्यप्यत्रानुव्याख्याने "विरोधिसर्वबाहुल्यकारणस्त्रीनिषेधिना"मित्येतत्पादीयाधिकरणोपाध्युक्तिदशायां पृथगुपाध्यनुक्तेस्तथा,

"सर्वमानैर्विरोधश्च व्युत्पत्तेरप्यशक्यता।
परस्परविरोधश्च विरोधः कार्यतद्वतोः।
स्त्रीलिङ्गत्वं निषेधश्च पूर्वपक्षेषु युक्तयः।
दोषात्यस्पृष्टिनियमः शब्दार्थानेकता तथा।
बहुरूपत्वमीशस्य व्यक्त्यव्यक्तिविशेषिता।
उत्पादनं स्वदेहाच्च दुर्जनाव्यक्तता तथा।
इत्याद्या युक्तयः साक्षात्सिद्धांतस्थापिका इह।"

इति पूर्वपक्षसिद्धांतयुक्तिसंग्रहदशायामपि पृथग्युक्त्यनुक्तेः। तथा भाष्येपि समन्वेतव्यशब्दांतरानुक्तेः। तत्त्वप्रदीपानुसाराच्च "समाकर्षा"दित्यादि सूत्राष्टकस्य पूर्वाधिकरणशेषतैव युक्ता। "साक्षादप्यविरोधं जैमिनि"रित्यादीनां वैश्वानराधिकरणशेषतावत्। तथापि पूर्वतंत्रे "हेतुदर्शनाच्चे"ति सूत्रस्य विरोधाधिकरणशेषत्वेपि पृथङ्न्यायसूचकत्वमिवास्यापि तदस्तीति दर्शयितुं टीकायामधिकरणांतरं कृतम्। अत्र च पूर्वोक्तन्यायैर्ब्रह्मणि "कल्पनोपदेशा"दिति न्यायेन चान्यत्रापि मुख्यत्वे सिद्धेपि मुख्यता किमक्षादिशब्दवदुभयत्रापि तुल्या किं वा ब्रह्मण्यधिकाऽन्यत्र तु हीनेति चिन्ता। तदर्थमन्यत्र हीनत्वेऽन्यत्रप्रसिद्धिरयुक्तोत युक्तेति।

पूर्वपक्षस्तु—हीनत्वे मुख्यवृत्तित्वं न स्यात्। अन्यथा लक्षणादिरपि मुख्यवृत्तिभेदः स्यात्। एवं च तदधीनत्वादिति सूत्रोक्तं स्वातंत्र्यस्यनिमित्तत्वमस्तु। तद्गतत्वापेक्षया मुख्यत्वं त्वयुक्तम्। अन्यत्र हीनत्वे च तत्र प्रसिद्धिर्न स्यात्। माणवकादावग्निशब्दादीनामप्रसिद्धेरिति॥

सिद्धान्तस्तु—यथा च मुख्ययोर्योगरूढ्योर्यद्वदमुख्ययोः।
गौणलक्षणयोर्भेदस्तथा रूढ्योश्च योगयोः॥

उचितं प्राज्ञरूढेर्हि प्राबल्यं मूर्खरूढितः।
उत्कर्षाच्च निमित्तस्य युक्तो नैमित्तिकस्य सः॥

रूढित्वेपि विद्वदविद्वद्रूढ्योर्योगत्वेपि योगमहायोगयोस्तारतम्यं युक्तम् । मुख्यत्वेपि योगरूढ्योरिव अमुख्यत्वेपि गौणलक्षणयोरिव लक्षणात्वेप्यंतरंगबहिरंगलक्षणयोरिव उपचारत्वेप्युपचाररूढोपचारयोरिव चेतीदमेतदधिकरणव्युत्पाद्यंप्रसंगादस्माभिर्जन्मादिसूत्रे प्रपंचितम् ।

यदैकेनैव रूपेण सिद्धा ब्रह्मणि मुख्यता।
रूपद्वयेन मुख्यत्वसिद्धिः किं कथ्यते तदा॥

यदा रूढेः प्राज्ञसंबंधित्वेन वा योगस्य महत्वेन वा एकेनैवं प्राबल्यसिद्धिस्तदा द्वाभ्यां प्राबल्यसिद्धिरिति किमु वक्तव्यम् लक्षणादौ तु नानुशासनाद्यस्तीति न मुख्यभेदता। जगति शब्दानां प्रसिद्धिस्तु तत्र प्रयोगप्राचुर्यात्।

अमुख्येपि प्रसिद्धिः स्यात् प्रयोगः प्रचुरो यदि।
गुणश्रुतेरकारादौ पाणिनीये प्रसिद्धिवत्॥

अत्र वैश्वानराधिकरणे "साक्षादप्यविरोधं "जैमिनि"रित्यत्र ब्रह्मणि मुख्यानां शब्दानामन्यत्र प्रयोगः किमर्थ इति शंकायां ह्यानादिव्यवहारार्थ इत्युक्तम्। "शरीररूपकविन्यस्ते"त्यत्र तु तर्ह्यन्यवाचकानामन्यत्र प्रयोगेऽव्यवस्था स्यात्। निमित्ताभावादिति शंकेश्वरसंबंधस्य निमित्तत्वोक्त्या निरस्ता। "कल्पनोपदेशा"दित्यत्र तु तर्ह्ययसिदग्धृशब्दस्येवान्यत्र लक्षणादिरेव स्यान्न तु मुख्यवृत्तिरिति शंकाऽन्यत्र रूढ्याद्युक्त्या पराकृता। "समाकर्षा"दित्यत्र तु तर्हि ब्रह्मण्यन्यत्रचाक्षादिशब्दवत्तुल्यतयैव स्यादिति शंकोभयत्र मुख्यत्वेपि ब्रह्मणि परममुख्वत्वमन्यत्र तु मुख्यत्वमात्रमित्युक्त्या समाहिता। "जगद्वाचित्वा"दित्यत्र तु कथं तर्ह्यन्यत्रप्रसिद्धिरितिशंका बालानां चित्रलिखितसिंहादाविव लोकानामन्यत्रैव शब्दव्यवहारात् नतु तत्र मुख्यत्वादित्युक्त्याऽपास्ता। "जीवमुख्यप्राणे"त्यत्र तु मुख्यतो वाच्यत्वे यल्लिङ्गं तदधीनत्वरूपनिमित्तं तस्य जीवे क्वचित् मुख्यप्राणे तु सर्वत्र संभवात्तत्रापि शब्दानामीश्वर इव मुख्यत्वादेव प्रसिद्धिरस्त्विति शंका लिङ्गस्य तदंतर्यामिगतत्वस्मारणेन निरस्ता। "अन्यार्थं तु जैमिनि"रित्यत्र तु लौकिकानां शब्दानां व्यवहारार्थमन्यत्र समाकर्षेपि वैदिकानां मुमुक्षुं प्रति कर्मदेवतादौ समाकर्षो निष्फलः। तस्य

फलांतरानिच्छुत्वात्। मोक्षस्य ब्रह्मज्ञानादेव सिद्धेरित्याशंका ब्रह्मज्ञानार्थमेव कर्मदेवतादिकं ज्ञापयितुं तत्र समाकर्ष इत्युक्त्या निरस्ता।

अत्र उत्तरसूत्रचतुष्टये च पूर्वसूत्रादनुषक्तस्य जगद्वाचित्वस्य जगद्वाचित्वमन्यार्थमित्यादिरूपेणान्वयः। एकविज्ञानेन सर्वविज्ञाने श्रुत्युक्तो मृत्पिंडमृन्मयादिदृष्टांतस्तु यथाऽनेकमृन्मयज्ञानं तत्कारणत्वेन मृत्पिंडस्य ज्ञानार्थं चेत् सफलम्। अपेक्षितमृन्मयसंपादनसंभवात्। नतु स्वरूपेण। एवं कर्मदेवतादिविज्ञानमपि तदाश्रयत्वादिना भगवज्ज्ञानार्थं चेत्सफलम्। नान्यथेत्यभिप्रायेणेति ज्ञेयम्। वाक्यान्वयादित्यत्र वैदिकशब्दानामन्यत्रासमाकर्षे प्रतिपदं ब्रह्ममात्रपरत्वे मंदानां तत्रानधिकारेण वै मुख्यं स्यात्। परस्परान्वययोग्यार्थाभिधानाभावेन वाक्यान्वयश्च न स्यात्। तथा च तत्समन्वयाधीनं ब्रह्मणो जगद्धेतुत्वसर्वशब्दवाच्यत्वादिकं, तथाश्रवणादिविधिः, तथा कर्मदेवतादिपरवेदभागस्य कर्मदेवतादाववांतरप्रामण्याभावेन कर्मदेवतादिकं न सिद्ध्येत्। तथाचोत्तमाधिकारिस्वरूपादेरप्यसिद्धापातेन तान्प्रति पदसमन्वयोपि न सिद्ध्येत्। समाकर्षे तु

" स्वार्थबोधे समाप्तानां अंगांगित्वाद्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायत ॥ "

इत्युक्तरीत्या प्रयाजादिवाक्यस्यावांतरवाक्यस्यैव सतो दर्शपूर्णमासवाक्यैकवाक्यतावत् कर्मादिभागस्य कर्मादौ अवांतरवाक्यस्यैव सतो ब्रह्मपरवाक्यैकवाक्यतारूपो वाक्यसमन्वयोऽपि सिध्यतीत्युक्तम्। " प्रतिज्ञासिद्धि "रित्यत्र तु कथं कर्मज्ञानार्थमितिशंकायां क्षुद्रफलार्थिनं प्रति तत्तत्फलाय तत्तत्कर्मविदधदपि कर्मवाक्यं मुमुक्षुं प्रति क्षुद्रफलत्वात्कर्मणां तद्धानेनाक्षुद्रफलकं ज्ञानमेवोपादेयमिति वैराग्यजननद्वारा ज्ञानार्थमित्युक्तम्। " उत्क्रमिष्यत " इत्यत्र त्वंतःकरणशुद्धिद्वारा कर्माण्युपादेयतया ज्ञानार्थमित्युक्तम्। " अवस्थिते "रित्यत्र तु कथं ब्रह्म ज्ञेयमिति जिज्ञासायाम्, स्वेतरसर्वाधारत्वेनेति साक्षाज्ज्ञानापेक्षितप्रकारसमर्पणायेतरोक्तिरित्युक्तमिति भेदः। सूत्रक्रमश्च। नच "समाकर्षा"दित्यादिसूत्राणि समन्वयमात्रसाधारणबाधकोद्धारकतयाऽध्यायशेषत्वादध्यायांते कर्तव्यनीति शंक्यम्। अत्रोक्तबाधकोद्धारप्रकारस्य " एतेन सर्वे व्याख्याता " इत्यत्रानतिदेशापातात्। " आत्मन आकाशः संभूत " इत्यादावाकाशादिशब्दानां ब्रह्मणि मुख्यत्वे गगनादेरुत्पत्त्यादि न सिद्ध्येदितिशंकाया अत्रैव संगतत्वाच्च।

अन्ये तु "असद्वा इदमग्र आसी"दित्यत्रासत्कारणत्वेनोच्यत इति प्राप्ते "अस्ति ब्रह्मेति चेद्वेदे"ति पूर्वप्रकृतं ब्रह्मैव "असद्वा" इत्यत्र समाकृष्यत इति। "समाकर्षा"दिति सूत्रार्थः। इदं च सूत्रं "कारणत्वेने"त्यधिकरणशेष इत्याहुः। तन्न। तथात्वेऽस्य सूत्रस्य ब्रह्मण्यसच्छब्दसमन्वयसाधकत्वेन समन्वयपरत्रिपाद्यामेव सङ्गतत्वेन प्रधानाशाब्दत्वनिरसके चतुर्थपादे विगाननिरासके "कारणत्वेने"त्यधिकरणे चासङ्गतेः। असद्वाक्यस्य "सदेव सौम्ये"ति वाक्येन विगानमपि समाकर्षसूत्रेऽर्थान्निरस्तं चेत्तर्हि "आकाशादेव समुत्पद्यन्त" इत्यादिवाक्यानां "यतो वा इमानि" इत्यादिवाक्यैर्विगानमपि "आकाशस्तल्लिङ्गा"दित्यादिसूत्रेष्वर्थान्निरस्तमिति तेषामपि समन्वयपरत्वं न स्यात्॥

यच्चोक्तमुभाभ्यां "योवैबालाकएतेषांपुरुषाणांकर्तायस्य चैतत्कर्मसवेदितव्य" इति कौषीतकिब्राह्मणे वेदितव्यत्वेनोक्तो जीवस्स्यात्। "यस्य चैतत्कर्मे"ति धर्माधर्माख्यजीवलिङ्गात्। मुख्यप्राणो वा। उत्तरवाक्ये "प्राण एवैकधा भवती"ति प्राणशब्दादेरिति प्राप्ते "एतत्कर्मे"त्यत्रैतच्छब्दस्य प्रत्यक्षादिसिद्धजगद्वाचित्वात्कर्मशब्दस्य च क्रियत इति व्युत्पत्त्या क्रियमाणवाचित्वाज्जगत्कर्तृत्वस्य च जीवादावयोगाद्ब्रह्मैवेति सिद्धान्त इति। तन्न। अतीतपादत्रये समन्वयमेतत्पादीयानुमानिकाद्यधिकरणत्रये च प्रधानस्याशाब्दत्वं "कारणत्वेने"त्यधिकरणे श्रुतीनामविगानं चोक्त्वा पुनरिह समन्वयोक्तेरसङ्गतत्वात्। अस्माकं रीत्या समाकर्षादित्यत्रान्वितानां शब्दानामेवात्रापि सूत्रेऽन्वयसंभव एतच्छब्दस्येत्यध्याहारायोगाच्च॥

यच्चोक्तमुभाभ्यां इह जीवोक्तिर्ब्रह्मप्रतिपत्त्यर्थेति "अन्यार्थं तु जैमिनि"रिति सूत्रार्थः। "जगद्वाचित्वा"दित्यारभ्यैतदन्तं सूत्रत्रयमेकमधिकरणमिति। तन्न। "यस्य चैतत्कर्मे"त्यत्र सिद्धान्ते जीवोक्तेरभावेन तस्यान्यार्थत्वोक्त्ययोगात्। मतान्तरस्याभावेन जैमिनिपदवैयर्थ्याच्च। आश्मरथ्यौडुलोमिकाशकृत्स्नमतानां विकल्पप्रतीतेर्मतचतुष्टयप्रतिपादकसूत्राणां वैश्वानराधिकरणस्थानां "अभिव्यक्ते"रित्यादिसूत्राणामिवैकाधिकरणत्वस्यैव न्याय्यत्वाच्च।

यच्चोक्तमुभाभ्यां "आत्मा वा अरे द्रष्टव्य" इत्यादिकं जीवपरम्। "न वा अरे पत्युः कामाय पतिः प्रियो भवति। आत्मनस्तु कामाय सर्वं

प्रियं भवती"त्यादि पूर्ववाक्ये प्रिययुक्तस्य भोक्तुर्जीवस्योपक्रमादिति प्राप्ते ब्रह्मपरमिदम्। कुतः। वाक्यान्वयात्। नहि "आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदित"मित्येकविज्ञानेन सर्वविज्ञानादि-वाक्यं जीवपक्षेन्वेतीति सिद्धान्त इति। तन्न। समन्वेतव्यविशेषानु-क्त्याऽस्यपूर्वशेषत्वस्यैवस्वरसत्वात्॥

यच्चोक्तं परैः। ब्रह्मपरेद्रष्टव्यादिवाक्ये जीवोपक्रमो जीवब्रह्मा-भेदाभिप्रायेण। तत्र च मतत्रयम्। जीवो ब्रह्मविकारतयाभिन्नाभिन्नः। अभिन्नत्वं चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धेर्लिङ्गम्। न हि जीवस्य ब्रह्मणात्यन्तभेदे तज्ज्ञानेन जीवज्ञानमित्याश्मरथ्यमतम्। संसारे भिन्नस्य जीवस्योत्क्रान्त्यनन्तरं मुक्तावेवं भावो ब्रह्मभावः। तथा च कालभेदेन भेदाभेदावित्यौडुलोमिमतम्। बिम्बस्य प्रतिबिम्बत्वेनेव ब्रह्मण एव जीवत्वेनावस्थितेः। तथा च भेदः काल्पनिकोऽभेदस्तु सत्य इति काशकृत्स्नमतम्। इति प्रतिज्ञासिद्धेरित्यादिसूत्रत्रयस्यार्थः। तत्र चाद्यं मतद्वयं सूत्रकृदनभिप्रेतं, श्रुत्यादिविरोधात्। तृतीयं त्वभिप्रेतमिति। तन्न। जीवोपक्रमस्यैवाभावात्। श्रुतौ हि "कामाये"ति चतुर्थीव्यत्ययेन तृतीयार्थे। अस्मिन्नेव प्रकरणे "जायायै"इति चतुर्थ्याः व्यत्ययदर्शनात्। एवं च पत्यादीनां भार्यादीन् प्रत्यहं प्रियः स्यामितीच्छया तान्प्रति न प्रियत्वम्। किंतु परमात्मन इच्छयैवेत्यर्थः। द्युभ्वाद्यधिकरणन्याये-नात्मशब्दस्य परमात्मनि मुख्यत्वात् परमात्मपरोपसंहारानुसारेणैवोप-क्रमस्य व्याख्येयत्वात्।

"पतिर्जायाप्रियो नैव स्वेच्छया तु भविष्यति।
विष्णोरिच्छावशेनैव स्वयं च स्वप्रियो भवेत्।
विष्णोरिच्छावशेनैव हन्ति ह्यात्मानमात्मना।
स्वात्मानमप्रियं कृत्वा निरये पातयत्यपि।
तदैव प्रीतये भूत्वा पुनर्दुःखाय जायत।"

इत्यादिवचनाच्च परतात्मेच्छाभावे सुभगे सुरूपेपि पत्यादौ जायादीना-मप्रीतिदर्शनाच्च। अन्यथा पत्यादीनां स्वीयत्वेनैव प्रियत्वात् स्वयमेव निरुपाधिकप्रिय इति परोक्ताङ्गीकारे दुःखादेरपि स्वीयत्वेनैवाप्रियत्वात् स्वयं निरुपाधिकाप्रिय इति स्यात्। किंच "आत्मनस्तु कामाये"त्यत्र स्वार्थे सर्वं प्रियमित्यर्थवत् "न वा अरे पत्युः कामाय पतिः प्रिय"

इत्यादावपि पत्याद्यर्थं पत्यादिः प्रियो न भवतीत्यर्थस्य वक्तव्यत्वेन स्वार्थं स्वयं प्रियो न भवति किंतु अन्यार्थं प्रिय इत्यर्थः स्यात् ।

त्वत्पक्ष आत्मशब्दस्य स्वात्मपर्यायत्वेन सम्बन्धिशब्दत्वात् प्रतिसम्बन्ध्याकाङ्क्षायां पत्यादीनामेवान्वयात्। तथा च स्वस्य निरुपाधिकप्रियत्वं निषिद्धं स्यादिति "आत्मनस्तु कामाये"त्यस्य "न वा अरे पत्यु"रित्यादेश्च मिथो विरोधः स्यात् । अपि च परोक्तार्थस्याविगानेन मानांतरप्राप्तत्वाद्वाक्यवैयर्थ्यम्। किंच "आत्मा वा अरे द्रष्टव्यः श्रोतव्य" इत्यादिविधेर्जीवविषयत्वं तवापि नेष्टमिति न तद्विषयोयमर्थवादः। विध्यर्थवादयोरेकविषयत्वात् । उक्तं हि "विधिस्तुत्योः सदावृत्तिः समानविषयेष्यत"इति। किंच परचैतन्यव्यावृत्तस्याहमर्थस्यैव निरुपाधिकप्रियत्वे मोक्षेऽहमर्थाभावात्तस्यानर्थत्वं स्यात्। द्वितीयसूत्रे चोत्क्रांतस्येति वक्तव्यम् । न तूत्क्रमिष्यत इति तृतीयेप्यस्मदीयाब्रह्मणि जगतोवस्थितेरिति योजनैव युक्ता। नतु ब्रह्मणो जीवभावेनावस्थितेरिति परोक्तावस्थितेर्हि कुत्रेत्याधार आकांक्षोत्थिता । कथमिति प्रकारेतूत्थापिता। न चोत्थिताकांक्षितस्याध्याहारं हित्वोत्थापिताकांक्षितस्य स युक्तः। अत्र चाद्यसूत्रद्वये प्रमेयास्वारस्यं परैरेवाङ्गीकृतम् । तृतीये तु प्रमेयास्वारस्यमभेदनिरासेन "पृथगुपदेशा"दित्यत्र वक्ष्यत इति नेहोच्यते। टीकाक्षरार्थस्तु स्पष्टः ॥ इति समाकर्षाधिकरणम् ॥ ५ ॥

---

## अथ प्रकृत्यधिकरणम्

## ॥ ॐ प्रकृतिश्च प्रतिज्ञादृष्टांतानुपरोधात् ॐ ॥

युक्ते रूपविशेषाद्व्यक्तव्यक्ती। स्त्रीत्वपुंस्त्वेत्वेकस्मिन्नयुक्ते इत्याक्षेपादनंतरसंगतिः। अत्र प्रकृत्यादिशब्दाः किमन्यपराः किं वा ब्रह्मपरा इति चिंता। तदर्थं स्त्रीलिंगस्य ब्रह्मणि किमर्थसाधुत्वं न युक्तमुत युक्तमिति। तदर्थं किं प्रसिद्धमेवस्त्रीत्वमर्थसाधुत्वनिमित्तमुतान्यदिति॥

पूर्वपक्षस्तु ॥ "एषाह्येव प्रकृतिरविकृति"रित्यादिवाक्यस्थप्रकृत्यादिशब्दवाच्यो न विष्णुः। तेषामन्यत्रप्रसिद्धत्वात्। स्त्रीलिंगत्वाच्च। परमपुरुषे च स्त्रीत्वायोगात्। नच रूपविशेषापेक्षया स्त्रीत्वम्। "नैनं वाचास्त्रियंब्रुव"न्निति स्त्रीत्वनिषेधात्। न च तत्केवलस्य लौकिकस्य

वा स्त्रीत्वस्य निषेधेनाहेयत्वपरम्। अन्यथा "नैनमस्त्रीपुमान्ब्रुव"-न्नित्युक्तवाक्यविरोधदिति वाच्यम्। तथात्वे पुंरूपे स्त्रीशब्दाप्रयोगापातात्। ब्रह्मणि नपुंसकलिंगब्रह्मादिशब्दप्रयोगस्तु नपुंसकलिंगस्यार्थसाधुत्वाभावेपि कलत्रादिशब्देष्विव प्रयोगसाधुत्वाद्युक्तः। नच प्रकृत्यादिशब्दे स्त्रीलिंगस्य चित्प्रकृत्यादावर्थसाधुत्वे संभवति देवताखट्वादिशब्देष्विव प्रयोगसाधुत्वं युक्तम्। "अरुणया क्रीणाति पशुना यजेते"त्यादावपि तत्प्रसांगात्। "चित्रया यजेत पशुकाम" इत्यादौ तु पुंपशौ प्राप्ते स्त्रीत्वं चित्रत्वं पशवः फलंचेत्यनेकविधाने वाक्यभेददोषांल्लिंगस्य प्रयोगसाधुत्वमाश्रित्य चित्रशब्दस्य यागनामतोक्ता। नचेह तथाचित्प्रकृतिपरत्वेदोषोस्ति। किंच लिंगस्य प्रयोगसाधुत्वेपि स्त्रीत्यादिशब्दानामपीह विषयत्वात्कथं तेषां परमपुरुषे वृत्तिः। एतेन "स्वर्गकामो यजेत ब्राह्मणो न हंतव्य"इत्यादौ पुल्लिंगं यथा न विवक्षितं स्त्रिया अपि पुंसा सहाधिकारादेः षष्ठादौ स्थितत्वात्। तथात्रापि लिंगं प्रत्ययार्थत्वात्प्रातिपदिकार्थत्वेप्युद्देश्यविशेषणत्वादविवक्षितम्। उक्तं हि "यो ब्राह्मण इति ह्युक्ते हननप्रतिषेधतः। ब्राह्मणे प्रतिषेधे वा लिंगं नान्यद्विधीयत" इतीति निरस्तम्। "ब्राह्मणो न हंतव्य"इत्यादाविव "एषा ह्येव"प्रकृति"रित्यादावुद्देश्य विशेषणत्वाभावात्। प्रत्युत"पशुना यजेत" इत्यत्र पशुगतपुंस्त्ववद्विधेयविशेषणत्वेन विवक्षितत्वात्। ब्राह्मणत्वस्य ब्राह्मणप्रातिपदिकार्थत्ववत्स्त्रीत्वस्य स्त्रीत्यादिप्रातिपदिकार्थत्वेन ब्राह्मणत्ववदुद्देश्य विशेषणत्वासंभवाच्च। नपुंसकमित्यादिशब्दानां ब्रह्मणि "ज्योतिरुपक्रमा"दितिन्यायेन यौगिकत्वेपि "तदधीनत्वा"दितिन्यायेन स्वातंत्र्यनिमित्तकत्वेपि प्रसिद्धस्य नपुंसकत्वस्य तद्गतत्वं निमित्तीकृत्य ब्रह्मणि प्रवृत्तिरिह पूर्वपक्षे न्यायसाम्येनाक्षिप्यते। एवं गायत्र्यधिकरणादेरप्याक्षेपः। यद्वा तत्पूर्वपक्षे छंदस्यपि स्त्रीलिंगप्रयोगसाधु। अत्र तु चित्प्रकृतावर्थसाध्विति वैषम्यान्नतत्याक्षेप इति॥

सिद्धान्तस्तु—

स्वदेहात् प्राणिनां सूतिहेतुत्वं स्त्रीत्वमुच्यते।
तच्चास्ति ब्रह्मणस्तस्मात् स्त्रीशब्दास्तस्य वाचकाः॥

ईश्वरो हि प्रलये स्वोदरे निवेशितं ब्रह्मादिप्राणिजातंस्वदेहादेव स्थूलदेहविशिष्टतया जनयतीति "स्वदेहादिच्छया विश्वं भुक्तपूर्वं जनार्दनः।

ससर्ज मातापितृवद्दूर्णनाभिवदेवचे"त्यादिभिः सिद्धम् । तदेव चेह स्त्रीत्वम् । "सूतिरव्यवधानेन स्त्रीत्वमाहुर्मनीषिणः" इत्यादिस्मृत्युक्तस्यैव श्रुतौ ग्राह्यत्वात् । उक्तं ह्येतत् "कंपना"दित्यत्र । तस्मात्स्त्रीशब्दा अपि ब्रह्मणि मुख्या एवेति । अत्रचाद्ये सूत्रे "नामानि सर्वाणी"त्यादि श्रुतिस्थ-सर्वशब्दस्य संकोचशंकायां "हंतैतमेवे"त्यादिभाष्योदाहृतश्रुतेरुपक्रमोप-संहारोपपत्तिभिः सामान्येन सर्वशब्दवाच्यत्वे तात्पर्यनिश्चयान्न सर्वशब्दस्य प्रकृत्यादिशब्देतरविषयत्वेन संकोचः शंक्य इत्युक्तम् । चशब्दस्तु स्त्रीत्वं चेत्तर्हि पुंस्त्वं न स्यात् । विरोधादिति न शंक्यम् "व्यवधानेनसूति" स्त्विति भाष्योक्तरीत्या द्वयोरुपपत्तेरिति प्रदर्शनार्थम् । द्वितीये स्त्री-शब्दोपलक्षकप्रकृतिशब्दवाच्यत्वे विशिष्यप्रमाणोक्तिः । अस्य चाभिध्यायाः प्रकृतित्वोपदेशाद्ब्रह्मणिश्चाभिध्यात्वोपदेशादित्यर्थः । तृतीये आद्योक्तं सामान्यरूपं द्वितीयोक्तं प्रकृतिशब्दवाच्येच्छात्मकत्वरूपं वा द्वारमनपेक्ष्य-प्रकृतिशब्देन तदुपलक्षितस्त्रीशब्दैश्च साक्षादेव प्रमाणोक्तिः । चतुर्थे उपलक्षके प्रकृतिशब्देप्रवृत्तिनिमित्ताभावरूपबाधकोद्धारः । अत्र च परि-णामादिति पंचमील्यब्लोपनिमित्ता । एवं च प्रकृतेर्महदादिरूपेण परिणामं विधाय तत्पेरणायात्मनो बहुधा कृतेरित्यर्थः । पंचमे उपलक्षितस्त्री-शब्दमात्रे तदुद्धार इति सूत्रक्रमः ।

यत्तूक्तमुभाभ्याम् । न केवलं ब्रह्म जगतः कर्तृ । किन्तु प्रकृतिश्च उपादानमपि । एवं हि "येनाश्रुतं श्रुतं भवती"त्येकविज्ञानेन सर्वविज्ञान-प्रतिज्ञायाः "यथा सोम्यैकेन मृत्पिंडेन सर्वं मृन्मयं विज्ञातं स्या"दिति दृष्टांतस्य चानुपरोधो भवतीत्याद्यसूत्रार्थ इति । तन्न । समन्वयस्य प्रधानाशाब्दत्वस्य चेहानुक्तेरध्याये पादे चासंगतेः । सांख्याभिमतप्रधान-एतत्पादीयाद्याधिकरणत्रयेण निरस्ते तर्हि जगन्निरुपादानं स्यादिति शंका-निरासार्थमस्य त्र्यानंतर्यस्यैव युक्तत्वेन "जगद्वाचित्वात् वाक्यान्वया-" दिति समन्वयपरानेकाधिकरणव्यवधानायोगाच्च । अस्य सूत्रस्य प्रकृति-शब्दसमन्वयपरत्वत्यागेन प्रकृतित्वव्युत्पादकत्वे "आकाशस्ताल्लिङ्गा"दित्या-देरप्याकाशत्वादि व्युत्पादनपरत्वापाताच्च । एकविज्ञानेन सर्वविज्ञानादे-रारंभणाधिकरणे निरसिष्यमाणत्वाच्च । यच्चोक्तं निमित्तत्वे सत्युपादानत्वे सौत्रोहेतुरिति तन्न । उक्ताभ्यां प्रतिज्ञादृष्टांताभ्यामुपादानत्वस्य सिद्धावपि निमित्तत्वस्य असिद्धेः ।

ननु यदि ब्रह्मकर्त्रपि न स्यात्तदान्यः कर्ता स्यात्। तथा च ब्रह्मज्ञानेनान्यस्य कर्तुरज्ञानात्प्रतिज्ञानस्यादिति चेन्न। दृष्टांतानुसारेण प्रतिज्ञावाक्यस्य कार्यपरत्वेन ब्रह्मज्ञानेन कारणांतराज्ञानेपि प्रतिज्ञोपपत्तेः। किञ्च अनादित्वेनाब्रह्मकार्याणां प्रागभावाविद्यादीनां ब्रह्माभेदाभावेप्येकविज्ञानेन सर्वविज्ञानवदुपादानकर्त्रभेदाभावेपि तत्किं न स्यात्। न चाविद्यादिकं प्रत्यधिष्ठानत्वरूपमुपादानत्वमस्तीति वाच्यम्। एवं हि कल्पितस्य कर्तुरपि कार्यांतर्गतत्वात्कार्यमकर्तृकमेव स्यात्। न तु अभिन्नकर्त्रुपादानकम्। न च प्रागभावादिवत् कर्तुरुपादानेनधर्मिसत्तासमानसत्ताकभेदसद्भावेपि पारमार्थिकभेदाभावमात्रेणाभिन्ननिमित्तकता। तदाहि गगनादिवद्घटादिकमप्यभिन्ननिमित्तोपादानकं स्यात्। मृत्कुलालयोरपि पारमार्थिकभेदाभावात्। तथाच घटादौ कर्त्रुपादानभेदं स्वीकृत्य गगनादौ तयोरभेदाय- प्राक्सृष्टेरद्वितीयमित्यादिश्रुत्या ब्रह्मान्यहेत्वभावव्युत्पादनं व्यर्थं स्यात्। किञ्च कर्तृकारकस्येव कालादिरूपाणामधिकरणादिकारकाणामपि ब्रह्माभिन्नत्वएकविज्ञानेन सर्वविज्ञानयोगात् "सदेव सोम्येदमग्र आसी"दिति कार्योत्पत्तेः प्राग्ब्रह्मवद्भूतकालाद्यपि कर्तृवद्ब्रह्माभिन्नं स्यात्। किञ्च—एकज्ञानेन सर्वस्य विज्ञानाद्ब्रह्म चेद्भवेत्। उपादानं तर्हि भवेत्ततएवानिमित्तता॥ निमित्तत्वे हि सति भेदापत्त्यैकविज्ञानेन सर्वविज्ञानं न युक्तम्। न हि व्याप्ये निमित्तत्वे सति व्यापकस्य भेदस्याभावः संभवतीति। नच उपादानत्वाभाव एव भेदव्याप्यो नतु निमित्तत्वमिति वाच्यम्। मृदोमृदं प्रत्यनुपादानत्वेपि भेदाभावात्। गौरवाच्च। अत एव नोपादानत्वाभावविशिष्टं निमित्तत्वं व्याप्यम्। निमित्तत्वाभावविशिष्टमुपादानत्वमभेदप्रयोजकमित्यापाताच्च। त्वन्मते तंतून्प्रतिनिमित्तउपादाने चोर्णनाभौभेदस्योर्णनाभिज्ञानेपि तदज्ञानस्य च दर्शनाच्च। अथ लोकदृष्टिमुल्लंघ्य श्रुतिबलान्निमित्तत्वेप्येकज्ञानेन सर्वज्ञानं तर्ह्यनुपादानत्वेपि तद्बलादेव तदस्त्विति दिक्। यच्चोक्तं भामत्यां "इहोपादानत्वं नाम भ्रमाधिष्ठानत्व" मिति। तत्राद्यसूत्रे प्रकृतिरिति प्रतिज्ञा न युक्ता। नहि सर्पस्य रज्जुः प्रकृतिरित्युच्यते। हेतुश्चायुक्तः। सूत्रोक्ते श्रौतमृत्पिंडादिदृष्टांते मृन्मयाद्यधिष्ठानत्वाभावात्। नहि मृन्मयं मृद्यध्यस्तम्। मृत्तत्वज्ञानेप्यनिवृत्तेः। यच्चोक्तं "सोकामयत बहुः स्या"मित्यभिध्योपदेशाद्ब्रह्मैवोपादानं निमित्तं चेति द्वितीयार्थ इति। तन्न। तत्र बहुभवनसंकल्पस्यैवोक्तत्वेन त्वदभि-

मताधिष्ठानत्वाप्रतीतेः । नहि स्थाणुः पुरुषः स्यामित्यभिध्यायतीति । यच्चोक्तं " सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यंत आकाशं प्रत्यस्तंयंती"-ति ब्रह्मण्येव जगदुत्पत्तिलययोः साक्षादाम्नानाद्ब्रह्मैवोपादानम् । नहि अनुपादाने कार्यस्य लय इति तृतीयार्थ इति । तन्न । रूप्यस्य शुक्तितः प्रभवप्रलययोरप्रसिद्ध्याविवर्तनादप्रतिकूलत्वात् । सौत्रस्योभयेत्यत्य सर्व-नाम्न-आद्यसूत्र-प्रकृतनिमित्तत्वोपादानत्वत्यागेनाप्रकृत-प्रभवप्रलय-परत्वा-योगाच्च । उपादानत्वमात्रस्य प्रलयमात्रेण सिद्धेः । निमित्तत्वे सत्युपा-दानत्वस्य तु तंतोरूर्णनाभौ प्रलयदर्शनेन केवलोपादानासाधारणाभ्यां प्रभवप्रलयाभ्यामप्यसिद्धेः । उभयपदवैयर्थ्याच्च । साक्षाच्छब्दास्वारस्याच्च । येहि निमित्तत्वोपादानत्वे परंपरयासाधिते तयोरेवसाक्षात् साधने हि साक्षात्पदं स्वरसम् । यच्चोक्तं " तदात्मानं स्वयमकुरुते "त्यात्मन एव सृष्टौ कर्मत्वकर्तृत्वोक्तेः, " सच्चत्यच्चाभव "दिति परिणामोक्तेः, " यद्भूतयोनि "-मिति योनिशब्दाच्चोपादानं ब्रह्मेति चतुर्थपंचमषष्ठानामर्थ इति । तन्न । विवर्तमते श्रुतौ सूत्रे च प्रकृतिपरिणामयोनिशब्दानामयोगात् । नहि रज्जुः सर्पं करोतीति वा सर्पोभवदिति वा सर्पात्मना परिणतेति वा सर्पयोनि-रिति वोच्यते । विवर्तपरिणामादिप्रक्रियात्वन्यत्र निरस्ता । चतुर्थसूत्रस्थ-परिणामशब्दबलात्परैः परिणामादेरुक्तत्वाद्भाष्ये तद्व्याख्यावसर एव परमतं परास्तमिति ॥

टीकाक्षरार्थस्तु ॥ नियामकविशेषाभावेनेति ॥ नपुंसकलिङ्गब्रह्मादि-शब्दवाच्यत्व इव स्त्रीलिङ्गवाच्यत्वे विशेषमानाभावादित्यर्थः ॥

॥ इति प्रकृत्यधिकरणम् ॥ ६ ॥

---

## अथ एतेनाधिकरणम्

## ॥ ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ ॥

अव्यवधानेनसूतिहेतुत्वरूपप्रकृतित्वमुक्तरीत्या ब्रह्मणि युक्तम् । रूपाहानेः । नतु निषेध्यत्वादि रूपमसत्त्वादिकम् । रूपहानेः । तस्मात् "असद्वा इदमग्र आसी"दित्यादिवाक्यस्थासच्छून्यादिशब्दवाच्यो न विष्णुः । नचासत्त्वस्य तद्गतत्वाभावेपि तदधीनत्वादसच्छब्दवृत्तिः

असतो निःस्वरूपस्य नियमनाभावेनेशानधीनत्वादित्याक्षेपात्संगतिपूर्वपक्षौ ॥

सिद्धांतस्तु—प्रसिद्धस्य शून्यत्वादेर्ब्रह्मगतत्वाभावेपि "शमूनं कुरुत" इत्यादिभाष्योक्तस्यानुव्याख्यानोक्तस्य दुर्जनाव्यक्तत्वस्य च निमित्तस्य तद्गतत्वात् प्रसिद्धस्यापि तदधीनत्वाच्च शून्यादिशब्दवृत्तिः। शशविषाणादेरत्यंताभावप्रतियोगित्वमीशाधीनम्।

उत्पिपादयिषेदीशो यदि शृंगं शशादिके।
गवादाविव जायेत तदभावादभूदसत्॥

अन्येतु—एतेन प्रधानकारणवादनिरासन्यायेन। परमाण्वादिकारणवादा अपि प्रतिषिद्धतया व्याख्याता इति सूत्रार्थ इत्याहुः। तन्न। प्रधानपरमाण्वादिकारणवादानां समयपादे निरसिष्यमाणत्वात्। तेषां श्रौतत्वमिहनिरस्यत इति चेन्न। येषां श्रौतकारणवाक्यानां ब्रह्मपरत्वं निर्णीतं तेष्वण्वादिपरत्वशंकानुदयात्। येषां तु तन्न निर्णीतं तेषां ब्रह्मपरत्वमेवातिदेष्टव्यं। तेन विनाऽण्वादिपरत्वनिरासासिद्धेः। किंचाध्यायोपसंहारस्थेनैतेनेतिशब्देनाध्यायादावुपक्रांतस्य मध्ये चोक्तस्य समन्वयन्यायस्य परामर्शसंभवेऽनेवंविधस्य प्रधाननिरासन्यायस्य परामर्शो न युक्तः। सर्वे इत्यस्याप्यध्यायार्थत्वेन प्रकृतसमन्वेतव्यशब्द जातीयपरत्वे संभवति नाण्वादिपरता युक्ता। व्याख्याता इत्यस्य निरस्ता इत्यर्थश्च न स्वरसः। यच्चोक्तमन्यैः अभ्यासोध्यायसमाप्तिप्रदर्शनार्थ इति तन्न। पादभेदस्येव प्रमेयवैजात्यादेवाध्यायभेदस्य सुज्ञानत्वात्। अन्यथा पादांतेपि स स्यात्॥

केचित्तु—ब्रह्मकांडएकैकविद्याविशेषादेव मुमुक्षोरिष्टसिद्धेर्ज्ञातव्यांतरं नास्तीति दर्शयितुं तत्तद्विद्यावसाने "नच पुनरावर्तते नच पुनरावर्तते" इत्यादिरभ्यासः। कर्मकांडेत्वेकैकमात्रेण रागिण इष्टसिद्धिरिति दर्शयितुं तत्तत्कर्मावसाने तदभावः। तथाच निर्णेतव्यानुरोधाद्ब्रह्ममीमांसायामध्यायांतेऽभ्यासः कर्ममीमांसायां तु नेत्याहुः। तन्न। तथात्वे प्रत्यधिकरणमेकैकविद्यानिर्णायकत्वेनाभ्यासापातात्। आद्याध्यायेऽभ्यासे न ज्ञातव्यांतरं नेतिसूचितत्वेन द्वितीयाद्यध्यायानां वैयर्थ्यापाताच्च। छांदोग्याद्युपनिषत्समाप्तावभ्यासेपि बृहदारण्यकादिसमाप्तौ तदभावाच्च। "संधीयते प्रजया पशुभिः यशसा ब्रह्मवर्चसेन स्वर्गेण

लोकेन सर्वमायुरेति सर्वमायुरेति" इत्यादौ पश्वादिफलकविद्यावसानेऽप्यभ्यासदर्शनाच्च। कर्मकांडेपि ऋग्वेदब्राह्मणादौ प्रत्यध्यायमंतेऽभ्यासदर्शनाच्च।

यच्चोक्तम्। अर्थसमाप्त्या नाध्यायसमाप्तिनिश्चयः। काष्ठैः स्थाल्यामित्यादौ वाक्यासमाप्तौ वाक्यार्थस्येवाध्यायासमाप्तावध्यायार्थस्याप्यसमाप्तेः। तस्मादभ्यासेनैवाध्यायभेदो ज्ञेय इति। तन्न। पादांतेऽप्यभ्यासापत्तेरुक्तत्वात्। काष्ठैः स्थाल्यामितिवदिह साकांक्षत्वाभावाच्च। पादचतुष्टयन्यायागोचरस्य समन्वेतव्यशब्दस्याभावाच्च। समन्वयविरोधयोर्भेदस्य स्फुटत्वाच्च। अन्यथा अर्थैकत्वनयेऽर्थभेदाभेदाभ्यां वाक्यभेदाभेदोक्तिरयुक्ता स्यात्। तस्मात् "अवधारणार्थं सर्वस्ये" ति भाष्योदाहृतस्मृत्युक्तमेव द्विरुक्तेः प्रयोजनम्। अत्र चाध्याये पादचतुष्टयेनयथाक्रमम्।

नामानि लिंगान्यपि चेतरत्र प्रसिद्धियुक्तानि तथोभयत्र।
प्रसिद्धिभांज्यन्यपदार्थ एव प्रसिद्धियुक्तानि समन्वितानि॥

तत्राप्यन्यत्रैव प्रसिद्धेषु वाक्यस्यान्यत्रावांतरतात्पर्ये सत्येव "ब्रह्मण्यपि तदधीनत्वा" दितिन्यायेन प्रवृत्तिनिमित्तानुरोधेन वा "ज्योतिरुपक्रमादितिन्यायेन श्रुत्युक्तयोगेन वा पदसमन्वयः। वाक्यान्वयादिति न्यायेन ब्रह्मपरवाक्यैकवाक्यतारूपवाक्यसमन्वयो वा। उभयत्रप्रसिद्धेषु अन्यत्रप्रसिद्धेषु च तत्तद्वाक्यस्यापि ब्रह्मैकपरत्वम्। तत्राप्युभयत्रप्रसिद्धेषु द्युभ्वाद्यायतनादिशब्देषु वाक्यांतरे ब्रह्मपरत्वेपि विषयवाक्ये तत्परत्वं नेतिप्राप्ते तन्निरासः। अन्यत्रप्रसिद्धेषु तु क्वापि ब्रह्मपरत्वं नेति प्राप्ते तन्निरासः। एवंच यथा कामिनि योज्यसमभिव्याहारेण स्थायिकार्यस्य लिङर्थत्वे निश्चिते लोके क्रियाकार्ये प्रथमव्युत्पन्नेपि लक्षणा, यथा वा "सुखं स्वर्गपदास्पद" मिति श्रुतेरलौकिकसुखस्य स्वर्गपदार्थत्वे निश्चिते लोके चंदनादौ प्रथमव्युत्पन्नेपि लक्षणा, यथा वा सिंहस्य सिंहशब्दार्थत्वे निश्चिते चित्रलिखितसिंहे प्रथमव्युत्पन्नेपि लक्षणा, तथोक्तरित्या चरमवैदिकव्युत्पत्तितो ब्रह्मणो मुख्यार्थत्वे निश्चिते प्रथमव्युत्पन्नोपि लौकिकार्थो न तथा मुख्यः। तदुक्तमनुव्याख्याने—

"विपरीतप्रमाभावे पूर्वारोहस्तु कारणम्।
सा भवेद्यत्र सव्यर्थः पूर्वारोहो भ्रमो यथा"॥ इति

तस्मात्—अपर्यायानंतशब्दैर्यौगिकैर्गुणवाचकैः ।
वाच्यत्वाद्ब्रह्मणः सिद्धा समस्तगुणपूर्णता ॥

अन्येतु आकाशादिशब्दानां ब्रह्मपरत्वमात्रेण तत्तद्वाक्यस्थब्रह्मलिंगानां जन्मादिसूत्रोक्तलक्षणातिव्याप्तिपरिहारस्य चोपपत्तेर्ब्रह्मवाचित्वमप्रमाणिकमप्रयोजनं चेत्याहुः । तन्न । "नामानि सर्वाणि यमाविशंति, अद्यतेऽत्तिचभूतानि तस्मादन्नं तदुच्यते, तद्वै त्व प्राणो अभवः । महान् भोगः प्रजापतेः । भुजः करिष्यमाणः । यद्देवान् प्राणमोनव, गायत्री वा इदं सर्व, गायति त्रायते चे"त्यादिश्रुतिभिः, "आसमंतात् काशते यदाकाश" इत्यादिस्मृतिभिश्चान्नादिशब्दानां यौगिकत्वोक्तेः । "साक्षादप्यविरोधं जैमिनि"रितिसूत्रे सांकरभाष्येप्यग्निवैश्वानरादिशब्दानां ब्रह्मणि यौगिकत्वोक्तेश्च । अतर्यामिभूमादिशब्दानां ब्रह्मणि यौगिकत्वोक्तेश्च । अंतर्यामिभूमादिशब्दानां ब्रह्मणोन्यत्र मुख्यत्वासंभवाच्च । "तं यच्छतंवर्षाणी"त्यादि श्रुत्या शतर्च्यादिशब्देषु स्वोक्तयोगविद्धरूढयोः "ता वा एताः सर्वा ऋचः सर्वे वेदा "इति शब्दांतरेष्वप्यतिदेशाच्च । रूढानां श्येनादिशब्दानां तु कर्मणि मुख्यत्वे मानाभावाद्योगकल्पकाभावात् "यथा वै श्येन" इति वाक्यशेषानुसाराद्गौणत्वादिकम् । येषां तूद्भिदादीनां योगः संभवति, येषां चाज्यादिशब्दानां "यदाजिमीयुस्तदाज्यानामाज्यत्व"मिति श्रुत्या योग उक्तस्तत्र यौगिकतैवाश्रिता । वैश्वदेवशब्दोपि "यद्विश्वेदेवाः समयजंत तद्वैश्वदेवस्य वैश्वदेवत्व" मिति श्रुतेर्यागाष्टके यौगिक एव । ननु मीमांसकोक्तरीत्या "वैश्वदेवीमामिक्षा"मिति श्रुतेरामिक्षायागस्य विश्वदेवदेवताकत्वाद्वैश्वदेवावैश्वदेव समुदाये छत्रिशब्दवल्लाक्षणिकः । श्रुत्युक्ते योगे सति योगमुखलक्षणाया अयोगात् । उपपादिता च भाष्यकृता श्रुत्यादिभिस्तत्तदधिकरणेषु ब्रह्मणस्तत्तच्छब्दवाच्यता ।

केचित्तु शरीरवाचिशब्दानां शरीरिपर्यंततायादेव मनुष्यादिशब्देषु दर्शनात्सर्वस्य च "यस्याव्यक्तं शरीर"मित्यादिश्रुत्या ब्रह्मशरीरत्वात्सर्वेपि शब्दा ब्रह्मपर्यन्ता इत्याहुः । तदपि न । जातिःशब्दार्थ इति भट्टादिमते व्यक्ताविव ब्रह्मणि लक्षणेति विवक्षायामुक्तश्रुत्यादिविरोधात् । अपसिद्धान्ताच्च । ननु यथा प्राभाकरमते जातौ शक्तेनापिशब्देनव्यक्तिधीः । तथाहि । व्यक्तिपरतन्त्रस्वभावैवाकृतिः प्रत्यक्षसिद्धा । न व्यक्त्यन्तर-

वत्स्वतन्त्रा। परतन्त्रा च परान्तर्भावघटितमूर्तिरिति शब्दादप्याकृतिस्तथैव भातीति जातिव्यक्त्योः शब्दजन्यैकधीवेद्यत्वेपि शब्दशक्तिरनन्यलभ्यायां जातावेव। नतु व्यक्तौ। नहि रूपिशून्यारूपधीरिति न्यायेन धर्मस्य धर्म्यालीढतयैव स्फूर्तिनियमान्नान्तरीयकतया जात्यन्तर्भावेणैव व्यक्तिधीसिद्ध्याव्यक्तेरन्यलभ्यत्वाभावात्। नापि व्यक्तौ लक्षणा। एकधीवेद्यत्वात्। तथा सर्वस्यापि ब्रह्मपरतन्त्रस्वभावत्वाद्ब्रह्मणि शक्तेर्लक्षणायाश्चाभावेपि ब्रह्मणस्तत्तच्छब्दजन्यधीवेद्यतेति विवक्षितमिति चेन्न। तत्संघटिततयैव प्रतीतियोग्यत्वं हि तत्परतन्त्रस्वभावत्वम्। न त्वन्यत्। प्रकृतानुपयोगात्। नहि वृश्चिकवाय्वादिशब्दैस्तदुपादानस्य गोमयाकाशादेर्वा गन्धादिशब्दैस्तदाश्रयस्य पृथिव्यादेर्वा धीरस्ति। तच्च योग्यत्वं तादृशप्रतीत्या कल्प्यम्। नच गवादिशब्देभ्योव्यक्तिघटितजातेरिव घटादिशब्देभ्यो लोके ब्रह्मघटितघटादि धीः। वेदेपि "आकाशादेव समुत्पद्यन्त" इत्यादौ केवलब्रह्मण एव धीः। अन्यथा तस्य ब्रह्मणि समन्वयो न स्यात्। आकाशः सम्भूत इत्यादौ तु केवलाकाशस्यैव धीः। व्युत्पत्तिबलादत्रापि ब्रह्मघटिताकाशप्रतीतिकल्पनायां त्वन्योन्याश्रयः। एवं च न काप्याकाशादिशब्दैर्ब्रह्मसंघटिताकाशादिधीरिति कथमाकाशादेर्ब्रह्मपरतन्त्रस्वभावता। एतेन यथादेवादिशब्दाः कृष्णरामादिशब्दा वा शरीरविशिष्टशरीरिवाचकास्तथाऽऽकाशादिशब्दा अपि ब्रह्मशरीरभूताकाशादि विशिष्टब्रह्मवाचका इति निरस्तम्। शरीरजडकृशस्थूलादिशब्दानां केवलशरीर इव लोक आकाशादिशब्दानां केवलाकाशादावेव प्रयोगात्। वेदेपि "आकाशादेव समुत्पद्यन्त" इत्यादौ केवले विशेष्ये "यस्याव्यक्तं शरीरं यस्य पृथिवीशरीरं यस्यापःशरीरं यस्याग्निः शरीरं यस्यात्मा शरीर"मित्यादौ च केवलविशेषणे प्रयोगेण विशिष्टे प्रयोगाभावात्। सम्भूतादिवाक्ये न विशिष्टपरत्वम्। तथात्वे हि विशिष्ट उपादानकारणत्ववत्कार्यत्वस्यापि सत्त्वेन विशेष्ये कार्यत्ववत्कारणत्वस्याप्यभावेन श्रुतिषु ब्रह्मणि कार्यत्वं निषिध्यकारणत्वं न विधीयेत। ईश्वरविशिष्टे पुनरीश्वरप्रवेशायोगेन सृष्टिवाक्यस्थाकाशादिशब्दानां केवलाकाशादिपरत्वस्यैव न्याय्यत्वाच्च। यदि च विशिष्टवाचिनां तेषां विशेषणे लक्षणा तर्हि समन्वयविषये विशेष्ये ब्रह्मण्यपि सास्यात्। किंच लोकवेदानुसारेण विशेषणवाचितैव। वेदे क्वचिद्विशिष्टे लक्षणेत्येव

किं न स्यात् ।

एवं "अहं ब्रह्मास्मि तत्त्वमसीत्यादावहमर्थादिविशिष्टे ब्रह्मण्यमहादिशब्दानां मुख्यत्वे "तदात्मानमेवावेदहं ब्रह्मास्मि तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतपे"ति निष्कृष्टे ब्रह्मादावहमादिशब्दानां लक्षणा स्यात् । ततोवरं लोकवेदानुसारेणाहमाद्यर्थे मुख्यता । तद्विशिष्टे तु ब्रह्मणि क्वचिल्लक्षणावा अस्मद्रीत्या प्रसिद्धनिमित्तस्य तदधीनत्वादिना शुद्ध एव ब्रह्मणि मुख्यता वा । देवादिशब्दास्त्वात्ममात्रे शरीरमात्रे च न प्रयुज्यन्त इति वैषम्यम् । किंच सर्वं न मुख्यत ईश्वरस्य शरीरम् । "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति । स यश्चायमशरीरः प्रज्ञात्मे"त्यादिश्रुतिभिः, "नैव प्रकृतिजाः क्वचि"दित्यादिस्मृतिभिश्च भगवतः प्राकृतशरीरनिषेधेन प्राकृतस्य पृथिव्यादेरीश्वरशरीरत्वायोगात् । पृथिव्यादेरीश्वरभोगायतनत्वाभावेनाशरीरत्वोक्तौ च भोगायतनवाचिनां देवादिशब्दानामेव शरीरिपर्यन्ततायां दृष्टत्वेन पृथिव्यादिशब्दानामीश्वरपर्यन्तता न स्यात् ।

"पृथिव्याद्यादेवतास्तु देहवत्तद्वशत्वतः ।
शरीरमिति चोच्यन्ते यस्य विष्णोर्महात्मन ॥"

इति स्मृतेश्च न पृथिव्यादिमुख्यं शरीरम् । किंच "यस्यपृथिवी शरीर" मित्यादिना न जडस्येश्वरशरीरत्वसिद्धिः । "यं पृथिवी न वेदे"त्यादिवाक्यशेषेण पृथिव्यादेश्चेतनत्वात् । किंच "अशरीर"मिति श्रुत्यालोकतः प्राप्तशरीरस्यैव निषेधात्तदनुरोधेन "यस्याव्यक्तं शरीर"मित्यादिकं न लोकसिद्धशरीरपरमिति न देवमनुष्यादिशब्दसाम्यसिद्धिः । अपि च यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यं तच्छेषतैकस्वरूपं च तत्तस्य शरीरमिति भवद्भिरुक्तत्वान्न तदधीनत्वातिरिक्तं शरीरत्वमस्ति । एतेन "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि नामरूपे व्याकरो"दिति श्रुतावीश्वरप्रवेशानंतरं नामरूपव्याकरणोक्तेस्सर्वशब्दास्तत्तद्विशिष्टेश्वरवाचिन इति निरस्तम् । विशेषणादावपि प्रयोगस्य दर्शितत्वात् । किंच जीवेनात्मनेति श्रवणात्त्वन्मते च जीवशब्दस्य जीवशरीरकब्रह्मवाचित्वाज्जीवशरीरकात्मनानुप्रविष्टस्य वाच्यत्वं स्यात् । नतु घटाद्यनुप्रविष्टस्य । कथं च देवतासु जीवशरीरकात्मनानुप्रवेशः । किंच अनुप्रवेशानन्तरं

व्याकरणमात्रेणानुप्रवेशस्य वाच्यकोटित्वे संकल्पानंतरंसृष्ट्यासंकल्पस्य सृज्यकोटिता स्यात् । श्रूयते च पूर्ववाक्येऽनुप्रवेशात्पूर्वमेव "तत्तेजोऽसृजत तदपोऽसृजत ता अन्नमसृजन्ते"ति तेजआदीनां नामसम्बन्धः । श्रुतौ तु छान्दोग्यभाष्योक्तरीत्या तेजोबन्नानुप्रवेशानन्तरं तदितरनामरूपव्याकरणमेव विवक्षितमिति ॥

टीकाक्षरार्थस्तु ॥ तुच्छशब्देतुदित्यस्यार्थमाह ॥ तोदनात्तुदिति ॥ छइत्यस्यार्थमाह ॥ अदृश्यः छ इति ॥ उभयत्रेति ॥ असद्वाचिशब्देष्वभाववाचिशब्देषु चेत्यर्थः । तस्मान्नारायणाख्यं ब्रह्मानन्तगुणमिति सिद्धम् ॥ इति एतेनाधिकरणम् ॥ ७ ॥

इति श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना
विरचितायां श्रीमद्भाष्यटीकाया विवृतौ
तात्पर्यचन्द्रिकायां प्रथमाध्यायस्य चतुर्थः पादः ॥

॥ श्रीकृष्णार्पणमस्तु ॥



# शुद्धाशुद्धपत्रम्



| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 9 | 10 | त्यत्रभाव | त्यत्राभाव |
| | 19 | लिंगोक्य | लिंगोक्त्य |
| 11 | 20 | परत्वेन | परत्वे च |
| | 22 | गुण | गुणे |
| 14 | 19 | तदभ्रो | तद्दभ्रो |
| | 29 | सकुचिन | सकुचित |
| 15 | 15 | दितेररवातर | दितेरवातर |
| 16 | 30 | असुख्य | अमुख्य |
| | | संहार्यमे | संहार्यत्वमे |
| 17 | 30 | वितत्वाच्च | चितत्वाच्च |
| 20 | 20 | विस्मृते | दिस्मृते |
| | 22 | अनश्नन्नयः | अनश्नन्नन्यः |
| 21 | 29 | उद्देष्य | उद्देश्य |
| 23 | 22 | युक्तास्तु | युक्तस्यास्तु |
| 32 | 21 | त्वान्तर | त्वन्तर |
| 33 | 19 | त्वग्रे | त्वग्रे |
| | 20 | ब्रह्म | बहु |
| 34 | 9 | भावत् | भावात् |
| 35 | 10 | आक्षोप | आक्षेप |
| 36 | 12 | प्रकृत्दादौ | प्रकृत्यादौ |
| 37 | 7 | विशिनिष्ठ | विशिष्ठनिष्ठ |
| | 12 | स्यभि | स्याभि |
| | 16 | पृयिव्या | पृथिव्या |
| 41 | 9 | बिम्बकाश | बिम्बाकाश |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 42 | 5 | चिञ्च | किञ्च |
| 46 | 11 | तयोच्युत | तयोच्यत |
| 49 | 16 | प्रयुज्यते | प्रयुज्यंते |
| 50 | 10 | भावादन्य | भावादनन्य |
| | 11 | अग्न्दा | अग्न्या |
| 51 | 7 | मीत्या | मीया |
| 53 | 17 | अर्भकौस्त्व | अर्भकौकस्त्व |
| | 27 | तन्न | तत्र |
| 59 | 11 | प्रेय | प्रेत्य |
| 60 | 6 | संख्या | साख्या |
| 62 | 20 | मोता | मोत |
| 63 | 27 | येह | येद |
| 67 | 5 | लिङ्गात् | तल्लिङ्गात् |
| 70 | 6 | गतस्यापि | गस्यापि |
| | 14 | सर्वप्रसिद्ध | सर्वत्रप्रसिद्ध |
| 71 | 11 | तिच्छत्वात् | तितुच्छत्वात् |
| | 18 | निवृतिः | निवृत्तिः |
| 72 | 3 | प्राण | प्राणा |
| 76 | 2 | प्रयोगमपेक्षते | ब्रह्मणि प्रयोगमपेक्षते |
| | 25 | वेवि | वेति |
| 77 | 9 | यस्मात् | तस्मात् |
| 78 | 22 | पाधिकत्वात् | पाधित्वात् |
| 79 | 8 | समाना | सामाना |
| 81 | 24 | द्युक्तामिति | द्युक्तमिति |
| 93 | 18 | त्यन्ताभवस्य | त्यन्ताभावस्य |
| 97 | 27 | तन्निष्टं | तन्निष्ठं |
| 98 | 8 | श्चेति | श्चेति चशब्दो |

| पृष्ठ | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| 100 | 14 | आकाशस्थस्व | आकाशस्थस्य |
| 102 | 7 | आगच्धति | आगच्छति |
| | 19 | तच्छाब्दादिकं | तच्छब्दादिकं |
| | 27 | कूल्येत | कूल्येन |
| 103 | 18 | तावादिह | तावदिह |
| 103 | 19 | लिङ्गमिति | लिङ्गत्वमिति |
| 104 | 11 | "त" | "तं" इति |
| 104 | 17 | परत्वात्याग | परत्वत्याग |
| | 19 | अभिधार | अभिघार |
| 106 | 24 | सर्वजगत्प्रकाशकाशत्व | सर्वजगत्प्रकाशकत्व |
| 111 | 14 | युक्तेः | द्युक्तेः |
| 112 | 11 | आकृतीनाभिव्यक्ति | आकृतीनामभिव्यक्ति |
| 112 | 21 | पृथिवीमंतरो | प्राणमंतरो |
| 115 | 5 | प्रत्यंग | पत्यंग |
| 118 | 8 | त्यात्रा | त्यत्रा |
| | 16 | पुरुषविधमुपैति | पुरुषविधमपि |
| | 22 | मोमास | मीमास |
| 119 | 15 | निरपेक्षामेव | निरपेक्षमेव |
| 120 | 12 | कर्मादिरिवोधा | कर्मादिविरोधा |
| 124 | 24 | संतोग्निनामाधि | सतोग्निमाधि |
| 126 | 13 | पर्वतेतरत्वादि | पर्वतेतरत्वादी |
| | 25 | जन्यत्वेनोपपत्तेः | जन्यत्वेन वोपपत्तेः |
| | 28 | दित्यर्वः | दित्यर्थः |
| 130 | 12 | व्याचक्षणस्य | व्याचक्षाणस्य |
| 133 | 20 | साधनतया | साधनताया |
| 138 | 30 | यौगिके | यौगिको |
| 139 | 14 | रूडि | रूढि |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 140 | 11 | मात्रैण | मात्रेण |
| | 18 | ततर्थे | तदर्थे |
| 142 | 26 | वैवधिकरण | वैयधिकरण्यम् |
| 143 | 2 | रित्येदपि | रित्येतदपि |
| | 6 | शब्द | शाब्द |
| | 9 | ह्रद्रदत्व | ह्रद्रतत्व |
| | 26 | यथाह | यथाहं |
| | 28 | विवक्षया | विवक्षाया |
| 145 | 1 | स्वप्न | स्वाप्न |
| 147 | 27 | निपात | निपाता |
| | 29 | प्रसिद्धे | प्रसिद्धेः |
| 148 | 24 | गत्य | गम्य |
| | 29 | शब्दगोचर | शब्दागोचर |
| 149 | 17 | त्वत्न्वयः | त्वत्वान्यः |
| 151 | 1 | द्रष्टृत्वं | द्रष्टृत्वं तु |
| 154 | 30 | शाकित | शंकित |
| 155 | 1 | प्रातिपादिकस्य | प्रातिपदिकस्य |
| | 3 | विशेषस्य | विशेष्यस्य |
| 156 | 13 | अधिक्ये | आधिक्ये |
| 157 | 11 | जिवार्यते | निवार्यते |
| | 17 | त्यत्रैव | न्यत्रैव |
| 158 | 12 | द्वितीयेपि | द्वितीयेपि हि |
| | 22 | दुःखादि | दुःख्यादि |
| 159 | 9 | शक्तादि | शक्तादि |
| 160 | 6 | स्यैयार्थे | स्यैवार्थे |
| 162 | 23 | अभिधनादि | अभिधानादि |
| 163 | 21 | ण्यंतोभ्यो | ण्यतेभ्यो |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 165 | 2 | घ्टष्टांतो | दृष्टांतो |
| 165 | 3 | शब्दत्व | शाब्दत्व |
| | 21 | चेत्तार्हि | चेत्तर्हि |
| | 24 | आकाश | आकाशा |
| | 26 | शब्दार्थस्व | शब्दार्थस्य |
| 168 | 30 | मित्यर्वः | मित्यर्थः |
| 169 | 13 | कालधिक | कालाधिक |
| | 21 | दयापि | दथापि |
| 171 | 19 | माद्येति | मादायेति |
| 176 | 26 | गौणात्व | गौणत्व |
| 178 | 6 | यजमानत्व | यजमानत्वं |
| 179 | 6 | हेतुर्भिर्बह्म | हेतुभिर्ब्रह्म |
| | 28 | ब्रह्म | ब्रंह्म |
| 184 | 27 | निरासे | निरासो |
| 189 | 6 | निरसके | निरासके |
| 192 | 2 | विरोधदिति | विरोधादिति |
| 193 | 11 | ब्रह्मणि | ब्रह्मण |
| | 13 | साक्षादेव | साक्षादेव वाच्यत्वे |
| 197 | 19 | वाक्यत्यापि | वाक्यस्यापि |
| 200 | 2 | ब्रह्मण्यमहादि | ब्रह्मण्यहमादि |